उदेति सद्ब्रह्मणि कर्म चासत् तद्ब्रह्मसत्ता रससेकतः सत् ।
ब्रह्मैव विद्याम तु तत्र कर्मण्यपीति देवा अवदन् पुरास्ते ॥ ४४ ॥
पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ४५ ॥
पूर्णात् पूर्णमुदचति पूर्ण पूर्णेन सिच्यते ।
उतो तदद्य विद्याम यतस्ततपरिषिच्यते ॥ ४६ ॥

## ७ ब्रह्मणो निर्विकारत्वे दृष्टान्ताः ।

८(१)जले प्रयुक्तानि बलानि तत्र क्रियात्मना स्युः परिणम्य भङ्गा ।
जले विकारान् प्रवदन्ति किन्तु स्याद्वस्तुतो नास्ति जले विकारः ॥ ४७ ॥
भङ्गैर्जलं विक्रियते न किञ्चिच्छोये स्वगं तत्र विकारमेति ।
फेने तु वायुर्निहितोऽस्य वायोः पार्थक्यतो निर्विकृतं जलं तत् ॥ ४८ ॥
अग्निश्च वायुश्च विनश्य तोयं पिधाय पृथ्व्या सृजतस्तथापि ।
जलं स्वतो निर्विकृतं निविष्टं तयोः पृथक्त्वे पृथगाविरस्ति ॥ ४९ ॥
अग्निश्च वायुश्च जलस्य रूपे बलैर्विचित्रैस्तु तथा क्रियेते ।
तावद्बलापक्षयतो जलं तत् स्वरूपमायात्यविनष्टसत्त्वम् ॥ ५० ॥

(२) पुष्पस्य वस्त्रस्य च संनिकर्षे गन्धान्तरस्यानुदयोऽस्ति वस्त्रे ।
निर्गन्धता लिङ्गमथाग्नियोगाद् गन्धोदयो वस्त्रवि कारतः स्यात् ॥ ५१ ॥
रसे तु यत्रोदयते बलस्य प्रणोदनादन्यबलं प्रसुप्तम् ।
न तत्र दृश्येत रसे विकारस्ततस्तमाहुः किल निर्विकारम् ॥ ५२ ॥

(३) मृदस्ति तूलं पुनरस्ति सूत्रं ततोऽस्ति वस्त्रं च पुनस्तनुत्रम् ।
ततोऽस्ति कन्था पुनरग्नियोगाद् क्षारं ततस्तत् पुनरस्ति सा मृत् ॥ ५३ ॥
इत्थं यदेकं भजतीह नानारूपं तमेवात्र विकारमाहुः ।
तत्र प्रकर्मादिविशेषयोगं बलं यदस्तीति रसः स एकः ॥ ५४ ॥

(४) अथाङ्गुलीकम्पत एव तत्र प्रकम्पनं नाम विकारमाहुः ।
कम्पो बलं तत्क्षितिरङ्गुलीयं धत्ते बलं निर्विकृतिः स्वरूपात् ॥ ५५ ॥
ये ये विकाराः प्रथितास्तदित्थं बलस्य रूपाणि मतानि तानि ।
विलीयते यत्र बलं ततोऽन्यथोद्भाव्यते यत्र स निर्विकारः ॥ ५६ ॥

(५) क्वचिद्विमोक्षः क्वचिदस्ति बन्धः क्वचिद्विकारः क्रमते विशेषात् ।
सर्गानुसर्गप्रतिसर्गभेदात् क्वचिद्विसर्गः प्रलयः क्वचित् स्यात् ॥ ५७ ॥
इत्थं रसे कर्मवशाद्विकारो दृष्टोऽपि नास्त्येव रसे विकारः ।
अकर्मणो लक्षणमस्ति कर्म तद्विक्रियालक्षितविक्रियोऽसौ ॥ ५८ ॥
योगो विभूतिर्यदि वास्तु बन्धो मुक्तिर्यमेवास्तु तथापि मृत्युः ।
रसेऽमृते स्यादुपसृष्टमुक्तोऽमृतं तु पूर्णं विभजत्यमुष्मिन् ॥ ५९ ॥

योपाधृपभ्यां तदिरानिराभ्यां यो बुद्बुद् फेनमृदात्मकोऽभूत् ।
परस्परासङ्गवशाद् विसर्गं स कर्मणां कर्मसु मज्ज इष्ट ॥ ६० ॥
यथा पुनः श्यामलपीतसङ्गतो विलक्षणं रूपमुपैति हारितम् ।
द्वयोर्विकारेण तथाऽमृते पुनर्न मृत्युसङ्गेन विकार ईक्ष्यते ॥ ६१ ॥
पूर्वाग्रतः प्रातरनेकदिक्क्रमात् दृष्टोऽम्बुबिन्दू रविरश्मिसंगतः ।
रक्तः स दृश्येत हरित्तथाऽन्यथा तथाऽमृतं मृत्युवशात् पृथग्विधम् ॥ ६२ ॥
यथा जलेऽस्मिन् निर्मले सितोपला नलेन रूपेण विकुर्वते स्वयम् ।
जलं विकुर्वन्ति च तेन तज्जलं न वस्तुतो विक्रियते तथाऽमृतम् ॥ ६३ ॥
विशुद्धशुक्लस्य पटस्य रञ्जनाद् यथा हरिद्रोहितरूपता मता ।
स रञ्जसङ्गस्य तु मङ्गतः शुचिस्तथाऽऽश्रयोऽस्मिन्नमृतेऽप्यसङ्गतः ॥ ६४ ॥
पृथक्स्थिता या न कदापि नश्यति प्रकाशते सा दिवसे न चन्द्रिका ।
यथाऽभिभूता तपनप्रकाशतस्तथाऽमृतं स्यात् तमसोऽतिशायने ॥ ६५ ॥
यतः स्वभावादमृतं निरञ्जनं ततस्तदाऽऽसञ्जनमृत्युसङ्गतः ।
न सज्जते न व्यथते न लिप्यते तदामृतं केवलमीक्ष्यतेऽन्यथा ॥ ६६ ॥

## ९ सदसद्वादामृतमृत्युवादाहोरात्रवादानां पूर्णब्रह्मसत्यवादशाखात्वम्

एवं स्थिरे ब्रह्मणि शान्तमूर्तौ कर्माणि नृत्यन्ति निरन्तरं यत् ।
तान्येव कर्माण्यखिला विकारा विभान्ति कर्मोपहितं तु शान्तम् ॥ ६७ ॥
कर्म त्वमद् ब्रह्म सदित्थमाभात्यतश्च सच्च द्वयमेव विश्वम् ।
कश्चित्सदाहामृतमृत्युशब्दं कश्चित्त्वहोरात्रपदैस्तदाहुः ॥ ६८ ॥

---

# अथ ब्रह्मकर्म्मणोः सम्बन्धाधिकारः ।

## १ ब्रह्मकर्मणोरलौकिकसम्बन्धाधिकरणम् ।

सम्बन्धमाहुः कृतिनो द्विनिष्ठं तथोभयोरेव कृती भवेताम् ।
किन्त्वत्र सम्बन्धगतिर्विभिन्ना स एकनिष्ठोऽत्र कृतिर्न हेतुः ॥ १ ॥
कर्म्मैतदासञ्जनमस्ति तस्मादासक्तमेवैतदुपेति रूपम् ।
निरञ्जनं ब्रह्म ततोऽत्र कर्म्म प्रसक्ततोऽप्यस्ति न बन्धभावः ॥ २ ॥
यद् ब्रह्म तन्नाम रसं वदामो बलं वदामः पुनरत्र कर्म्म ।
रसः स्थिरस्तत्र बलं प्रविष्टं बलानुरोधाद् रस एव विश्वम् ॥ ३ ॥
बलं हि यत्नो बलमेव हेतुर्बलप्रयोगाय बलं कुतः स्यात् ।
अयत्ननिर्हेतुकमेतदस्मिन् रसे बलं नित्ययुतं स्थितं स्यात् ॥ ४ ॥
एकस्तु सम्बन्धमपेक्षते परो नापेक्षते तेन स एकतः कृतः ।
तिष्ठत्युदासीनतया बले रसो न सज्यते सज्यत एव तद्बलम् ॥ ५ ॥
संबध्यते तत्र रसे बलं भृशं तेनेदमाभाति बलं रसात्मना ।
संबध्यते नैव रसो बले यतस्ततो रसोन्मुक्तमिदं विलीयते ॥ ६ ॥
रसोऽपि चेत्तेन बलेन बन्धं यायात्तदा तस्य बलस्य नाशे ।
रसोऽपि नश्येद्विकृते बले वा रसोऽपि तद्वद्विकृतोऽभविष्यत् ॥ ७ ॥
प्रत्यक्षमीक्षे तु मृदो घटस्य या सत्ता किलैका, घटनाशतोऽपि सा ।
मृन्नाशतो वा बलनाशतोऽपि वा शून्यस्थिता सा न कदापि नश्यति ॥ ८ ॥
यथा घटाकाशविनाशवासना घटक्षयोपाधिकृता न वस्तुतः ।
तथैव सत्ताविगमस्य धीरियं घटक्षयोपाधिकृता न वस्तुतः ॥ ९ ॥
घटेन सत्ता यदि बन्धमेयात् घटात्ययेऽवश्यमिदं व्यपेयात् ।
सत्ता रसो नित्यमनञ्जनोऽयं तथैव विश्वानि न तेषु सोऽयम् ॥ १० ॥
इत्थं रसो यद्यपि न क्वचिद्बले सम्बन्धमायाति विकारमेति वा ।
तथापि तस्मिन् बलमेकतः सदा सम्बद्धमेव ध्रियतेऽन्तरिक्षवत् ॥ ११ ॥
अथोदितः कर्म्म तु कर्म्मणां तु यः सम्बन्ध इष्टः स विभिन्नलक्षणः ।
तयोर्विवेकाय पृथक् पृथक् पुनः सम्बन्धमेतानिह दर्शयाम्यहम् ॥ १२ ॥

## २ कर्म्मणि कर्म्मसंबन्धाः पञ्चविधाः ।

कर्मान्वयः कर्मणि पञ्चधा स्यात् स्थानावरोधेन समङ्गमेन ।
ऐकात्म्यरूपेण तथैकभाव्यरूपेण सर्वथा च विरोधमार्गैः ॥ १ ॥
(१) जलेन पूर्णेन जलं मृदा न स्थास्यतेऽविरोधात्मणिके निवेश्यते ।
स्थानावरुद्ध्याणोरसर्पणात् धर्मो शक्नुनिदान. [illegible] ॥ २ ॥

(२) ‘तमश्रमत्वात्तु गृहे प्रकाशे दीपप्रकाशाः शतमाभवन्ति ।
दीपेषु भूयस्स्वधिकारकाशाऽवगाहिमानोऽपि स देशवृत्तेः ॥ ३ ॥
यद्दर्पणे चक्षुषि चान्यदेशे तेजांसि रूपाणि पृथग्विधानि ।
दिग्भ्यः समागत्य पृथग्विधाय. सहैव तिष्ठन्ति समञ्जसं तद् ॥ ४ ॥
विचाल्यमानं हि बलेन केनचिद् विरुद्धदिग्लब्धबलान्तराश्रयात् ।
स्थिरीभवेत् तत्र विरुद्धदिग्भवं बलद्वयं तद् युगपत् सहाश्रु ते ॥ ५ ॥
(३) अयोऽग्निना, चूर्णमयाम्बुना, घृतेरैकात्म्यमायाति, मृदग्निपाचिता, ।
(४) तेजोम्बुनोस्ते परमाणवो नवं जलाणुमानं जनयन्ति योजिताः ॥ ६ ॥
(५) अनिरंले दिग्द्वयभित्तिकीलायलम्बितमास्तगुणे तु सूत्रे ।
सूत्राद्बलिष्ठं ध्रियतेऽवलम्ब्यं यथादि तन्द्भित्तिबलस्य भक्त्या ॥ ७ ॥
महोन्नतं चापि महाबलिष्ठं कपाटमार्गयते कुद्योऽपि ।
लोष्ठेन कीलेन च रुद्ध्यते तत् तनाबलं तत् प्रबलस्य भक्तम् ॥ ८ ॥
यो दुर्बलोऽप्येकजनो बलिष्ठान् राजाऽऽज्ञयाऽऽक्रामति भूयसोऽपि ।
तन्न्यायसिद्धान्तविरोधिनो या तत्राबलं तत् प्रबलस्य भक्तम् ॥ ९ ॥
गच्छत्यगच्छन् शिविकास्थितो नरस्तत्रैकभूत. शिविकागतिक्रमाद् ।
इतीदृशे पञ्चविधेऽपि चान्यथे स्वाभाविरोधोऽभिमत प्रधानत· ॥ १० ॥
य· कर्मणे ब्रह्मणि संभवो न स स्वाभावरोधाय कदापि जायते ।
पूर्णे रसेऽपूर्णबलं यतस्ततस्तादात्म्यरूपेण युनक्ति सर्वतः ॥ ११ ॥

## २ ब्रह्मणि कर्म्म संबन्धास्त्रयोदशविधाः १३ ॥

* ३ शश्वत्स्थिते ब्रह्म च कर्म च द्वे तयोश्च सम्बन्ध उदेति शश्वत् ।
द्वयं विशिष्टाद्वयमेतदेवं सम्बद्धरूपं ध्रियतेऽपि शश्वत् ॥ १ ॥
सम्बन्धभेदस्तु रसे बलस्य त्रयोदशाह्नु किल तान् वदाम· ।
अलक्षणं चाथ विभूतियोगौ बन्धोऽमितो वृत्तरुदारवृत्ति ॥ २ ॥
स्यात्सप्तमीयं समवायवृत्तिरासक्तवृत्ति पुनरष्टमी स्यात् ।
अभ्युदस·री दहरोत्तरत्वौतप्रोतभावी च प्रह्वोद्प्रह्वत्वम् ॥ ३ ॥

| * ब्रह्मणि | कर्म्मसम्बन्धास्त्रयोदश १३ | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | स्वरूपसंबन्धा ४ | | पर्य्याप्तिवृत्तित्वसंबन्धा· | | | अन्वाभक्ति वृत्तित्वसंबन्धा | | |
| १ | अलक्षणम् | असंसर्ग. | १ | अतिम धृसित्वम् | असंसर्गः | १ | सन्धि | असं० |
| २ | विभुति | संसर्ग | | | | २ | दहरोत्तरत्वम् | " |
| ३ | योग | संसर्ग | २ | उदार | संसर्ग | ३ | ओतप्रोतत्वम् | " |
| ४ | बन्ध· | संसर्ग | ३ | आसक्त | संसर्ग· | ४ | प्रह्वातिप्रह्वत्वम् | " |
| | | | ४ | समवाय· | संसर्गः | ५ | अभ्युदत्वम् | " |

## ४ त्रयोदशविधानां सम्बन्धभेदानां स्वरूप वृत्तित्वाभ्यां विभागः ।

४ अन्योन्यमेते परिचिता. स्युस्तेषाममीषां परिवर्तनं यत् ।
आकस्मिकं तत्र, कलात्र कामात् स्वभाव एवात्र परं निदानम् ॥ ४ ॥
स्वरूपसम्बन्धविधाश्चतस्रो वृत्तित्वसम्बन्धविधास्ततोऽन्याः ।
पर्याप्तिवृत्तित्वविधाश्चतस्रोऽन्वाभक्तिवृत्तित्वविधास्तु पञ्च ॥ ५ ॥
उद्भावकं स्यात् पुरुषप्रकृत्योः स्वरूपमायोजकमेतयोः स्यात् ।
पर्याप्तिवृत्तित्वमथैवमन्वाभक्तिस्तु पुंसोरिह सान्धहेतुः ॥ ६ ॥
अन्तःप्रवेशादविविक्तायां स्वरूपसम्बन्ध इति प्रसिद्धिः ।
विविक्तभावेन तयोः प्रतीतौ वृत्तित्वसम्बन्धमुदाहरन्ति ॥ ७ ॥

## ५—तेषां पुनः संसर्गासंसर्गाभ्यां विभागः ।

● ५ अपूर्वसृष्टिर्यदि चेदुभाभ्यां संसर्ग उक्तः स समन्वयोऽपि ।
षडत्र संसर्गविधाः स्युरेवं सप्तत्वसंसर्गविधाः स्युरन्याः ॥ २१ ॥
बन्धश्च योगश्च विभूतिनामाऽऽसङ्गोऽप्युदारः समवाय इत्थम् ।
त्रिधा स्वरूपं त्रिविधा च वृत्तिः संसर्गसम्बन्धविधाः षडेताः ॥ २२ ॥
अलक्षणे चामितवृत्तितायामध्यूढसन्ध्यादिकपञ्चके च ।
न सर्गवृत्तिर्न च मोक्षवृत्तिस्तस्मादसंसर्गविधाः स्युरेता. ॥ २३ ॥

## ६—स्वरूपसंसर्गाणां वृत्तित्वसंसर्गाणां च परिभाषा ।

६ बलं रसे ब्रह्मणि चोत्थितं पतन्निलीयते तत्र पुनर्विजायते ।
तत्र स्वरूपेण निलीयते पुन. समुत्थितं वृत्तितयाऽनु सञ्जते ॥ २४ ॥
यत्रोदयं याति बलं तु तद्रसे संसर्ग एतस्य विधीयते नहि ।
बलान्तरेणावहिते रसान्तरे बलान्तरं याति समन्वयः स हि ॥ २५ ॥
रसो रसेनैक्यमुपैति चेद्बलं बलेन भूयो ऽप्युभयं यदेकताम् ।
तदा स्वरूपं प्रथते ततोऽन्यथा वृत्तित्वमेवेति मुहुर्विचिन्त्यताम् ॥ २६ ॥
बलप्रवाहं प्रथमप्रवृत्तं यदोपमर्द्यानुपमर्द्य वा ऽस्मात् ।
प्रवर्ततेऽन्यः प्रबलः प्रवाहः संसर्गसम्बन्धगतिस्तदा स्यात् ॥ २७ ॥

---

● ब्रह्मणि कर्मसंबन्धास्त्रयोदश १३

| | | | | | |
|---|---|---|---|---|---|
| १ | बन्धः | स्वरूप–संसर्गा- ३ | १ | अलक्षणम् | असंसर्गः स्वरूप संबन्धः १ |
| २ | योगः | | २ | अमित वृत्तिता | असंसर्गःपर्याप्ति-वृत्तित्वम् ( |
| ३ | विभूतिः | | ३ | अध्यूढभावः | असंसर्गःअन्वाभक्तिवृत्तित्वं ५ |
| ४ | आसङ्गः | पर्याप्ति—, वृत्तित्व–संसर्गाः ३ | ४ | प्रह्लातिप्रह्वभाव | ,, |
| ५ | उदार | | ५ | ओतप्रोतभावः | ,, |
| ६ | समवायः | | ६ | दहरोत्तरभाव | ,, |
| | | | ७ | संहिता (सन्धिः) | ,, |

## ७ अलक्षणमसंसर्गः स्वरूपसम्बन्धः ।

७ स्वरूपसम्बन्धगतिर्द्विधा स्यान्मृत्युमनुस्याऽमृतमृत्युमुक्तया ।
स्वापे बलं स्यात्तु रसस्वरूपं बलस्वरूपस्तु रसो न तेन ॥ ८ ॥
सुप्त्या न जागर्ति रसो न शेते ततो रसो नास्ति बलस्वरूप. ।
जागर्ति निद्राति बलं ततस्तत् सुप्तं भवत्येव रसस्वरूपम् ॥ ९ ॥
प्रस्वापतो यत्र भवेत् स्वरूपमलक्षणं तत्र च तत्र,सर्ग. ।
अन्योन्ययोगात्तु तयो स्वरूपे समन्वयोऽस्तीह ततोऽस्ति सर्ग ॥ १० ॥

## ८—अलक्षणसम्बन्धोदाहरणानि ।

८ यथास्ति पादे गतये बलं करे तत्क्षेपणायास्ति बलं तथा मुखे ।
यद्धं बलं किन्तु न सर्वदा तत कार्याणि लोके, तदलक्षणं बलम् ॥ १ ॥
यथाम्र बीजेऽस्ति कुटाङ्कुरोद्भिदे रसानिहाकृष्य निरन्तरं क्रमात् ।
स्कन्धप्रशाखाविटपादिभूतये बलं तथाप्यत्र तदस्त्यलक्षणम् ॥ २ ॥
इहावकाशे ऽस्ति तमस्तथेह च्छाया तथेहातप एव इत्थम् ।
लक्ष्यन्त एते हि दिवावकाशा नक्तं तदाकाशमलक्षण स्यात् ॥
तथा नियुक्तेऽस्त्यमृते स मृत्यु सुप्तस्ततोऽव्यक्ततयास्त्यलक्ष्य ।
वैविध्यतो लक्ष्यतेऽमृतं य स नास्ति तेनामृतमप्यलक्ष्यम् ॥ ३ ॥
तदन्तरे तत्परितो बहिर्वाऽऽहित हि मृत्यावमृत समन्तात् ।
तत्रास्य मृत्योरमृतं स्वरूपं सर्वाविविक्तं तदलक्षणं स्यात् ॥ ५ ॥
अलक्षणं तज्जगतोऽस्वरूपमाद्यं ततो लक्ष्यमिद जगत् स्यात् ।
नाना जगन्ति प्रभवन्ति तेषामन्यान्यकाला प्रलयोदया स्यु ॥ ६ ॥

## ९ संसर्ग सम्बन्धे संबन्धिनोर्बीजयोनित्वाभ्यां विभागः ।

९ आधीयते ऽन्यत्र यदन्यदस्मिन्नभ्याहित चेदुदरेऽन्तरेति ।
स्वरूपतस्तच्च्यवते तदानीं भुक्तं तदन्येन तदन्यदाहु ॥ ११ ॥
अन्नादनं तत्र द्विविधं कश्चिद्वा विस्रस्तभागप्रतिपूरणाय ।
ह्रदे प्रणालीहृतवारिपूर्य वारिप्रणाल्याऽपरयाऽभ्युपैति ॥ १२ ॥
दीपार्चिषि स्रंसितभागपूर्तिं करोति तैल क्रमश प्रविष्टम् ।
जीर्णोऽग्निसर्गोऽन्न मेद्याच्चितत् तद्विस्रस्तभागप्रतिपूर्तिहेतु ॥ १३ ॥
अथ कश्चिद्वा नवनस्तुसृष्ट्यै तदन्नमन्नादसमन्वितं स्यात् ।
एकस्य विष्टस्य विशेषयोगादन्यान्यवस्तूनि भवन्ति लोके ॥ १४ ॥
दुग्धे तदन्यान्यविशेषयोगादामिक्षिका वा दधि वा शरो वा ।
रसे तदन्यान्यनलप्रयोगात् परोऽक्षरो वा भवति क्षरो वा ॥ १५ ॥

तत्रेह सृष्ट्यर्थयुतिक्रमे यो भोगाय भोक्ता क्रमते स्वभोज्ये ।
स उच्यते तत्र वृषाऽथ योषा संख्यायते भोग्यतया प्रतीता ॥ १६ ॥
संसृज्यते तत्र च यावदंशो वृष्णस्तमंशं कथयन्ति बीजम् ।
यावान् समन्वेत्यपि योषिदंशो योनिःस तावान् व्यपदिश्यतेऽत्र ॥ १७ ॥
मृत्युर्यदि स्यादशितोऽमृतेन स्वरूपसंसर्गत आत्मसृष्टिः ।
बलाशितेऽस्मिन्नमृते तु योनेः स्वरूपसंसर्गवशेन सृष्टिः ॥ १८ ॥
रसोऽयमात्मा पुरुषोऽथ तस्य तद्बलं तुयोनिः प्रकृतिश्च कथ्यते ।
यावन्न जायेत समन्वयोनयोर्न तावदाभ्यां किमपीह सृज्यते ॥ १९ ॥
रसस्वरूपेण समन्विते बले कर्मात्मनः स्यात्पुरुषस्य संभवः ।
बलस्वरूपेण समन्विते रसे योनेः प्रकृत्या अपि संभवो नवः ॥ २० ॥

## १०—त्रयः संसर्गाख्याः स्वरूपसंबन्धाः ।

१० स्वरूपसंसर्ग इह त्रिधा स्याद् बन्धश्च योगश्च तथा विभूतिः ।
अनुग्रहादेव भवेद् विभूतिर्यत्कौशलं कर्मसु योग एषः ॥ ७ ॥
बन्धस्तु सङ्गातिशयादिह स्यादेभिस्त्रिभिः संस्क्रियते स आत्मा ।
त आत्मसर्गास्त्रिविधाः प्रसिद्धाः संसर्गनाशं तु वदन्ति मोक्षम् ॥ ८ ॥
ब्रह्मप्रधानः स विभूतिसर्गः कर्मप्रधानः पुनरेष बन्धः ।
द्वयोस्तु साम्ये भवतीह योगो विश्वं त्रिसंसर्गवशात् प्रवृत्तम् ॥ ९ ॥

## ११—विभूति संसर्गः । १ ।

११ यत्र द्वयोरन्वितयोस्तु सर्गादिकं मृतं स्यादमृतं द्वितीयम् ।
स्वतन्त्रमेकं परतन्त्रमन्यद्याऽन्वेति नान्वेति विभूतिरेषा ॥ १० ॥
यद्दर्पणे सन्निहितं मुखं, जपापुष्पस्य वर्णः स्फटिकेऽवभासते ।
तत्राहितोऽर्थो विभवन् स्वमाश्रयं स्वेनैव रूपेण तदाऽवभासयेत् ॥ ११ ॥
आवेशसत्वे तु विभूतिरिष्टा, नाऽनाविशत् नात्र विभूतिरेषा ।
उदारवृत्तिः कथितोपरागादस्योपरागं हि वदन्ति वृद्धाः ॥ १२ ॥
यत्ताम्रतन्त्री ज्वलितीह विद्युद्, यदग्नितापोऽस्ति जलेऽनुतप्ते ।
यादङ्गारखण्डेऽङ्गिरसः स्थितिः सा विभूतिरस्तीति समर्थयामः ॥ १३ ॥
यदिच्छतो यत्नतः स्थिरः करः प्रतिष्ठतीह प्रचरत्यनेकधा ।
प्राणस्य ॥ नुचरस्य सा करे विभूतिरन्तर्निहिताऽप्यलिप्तवत् ॥ १४ ॥
उत्क्षिप्यते लोहमयो शरस्तयो यंत्राहितं स्याद् बलमन्तरान्तरे ।
शरो बलेसौ बलमस्ति तच्छरे विभूतिरेषा न शरेऽनुपज्जते ॥ १५ ॥
न चेष्टका शुष्कमृदाभवेत् ततो जलात् करोतीह मृदं तु पेशलाम् ।
तयेष्टकासंपदि शोष्यते जलं दिवाग्निवायुर्विमयत्यथेष्टकाम् ॥ १६ ॥

न लोहखण्डद्वितयं परस्परं संयुज्यते तेन तदग्निना द्वयम् ।
अनुपेत्य चेदपि युज्यतेऽञ्जसा शिखाग्निवायुर्विभयत्यनुपम तत् ॥ १७ ॥
गजाश्वदेशाद्विगताद्वयो यदा दृष्टौ स्मृतौ वा प्रतिभातितत्र हि ।
विज्ञानमेकं विभजत्यनुक्रमादमीषु भूयो महिमस्त्वनेकधा ॥ १८ ॥

## १२—योगसंसर्गः । २ ।

१२ यत्र द्वयोरन्वितयो. स्वतन्त्रप्रवृत्तयोः कर्म्मणि साहचर्यात् ।
द्वियोगजं धर्ममपूर्वमुत्पाद्य चान्यतोऽन्यत्क्रियते स योगः ॥ १९ ॥
प्राचीं प्रतीचीं च पृथक् पतत्रे पतत्रिणः संपततस्ततः स्यात् ।
गत्योर्द्वयोर्योगवशादुदीचीगतिर्विभिन्ना समकोणसिद्धा ॥ २० ॥
यत्पाणिना पाणिरमुष्य घृष्यते बलाद् हठोऽश्मा प्रतिहन्यतेऽश्मना ।
विद्युद्द्वशक्तिद्वययोगतस्ततस्तदाऽनलश्चक्रगतिर्विजायते ॥ २१ ॥
कृष्णोऽतिसूक्ष्मावरणोऽन्तराहितो यद्दिमंशन् भास्वरशुक्ल ईक्ष्यते ।
रक्तः स वर्णस्तत एव शोणितो धूमाग्निरक्तार शुचिः प्रगे रवि ॥ २२ ॥
पीतेऽतिसूक्ष्मावरणेऽन्तराहितो यद्दिमंशन् श्यामल ईक्ष्यते यदि ।
हरित् स वर्णस्तत एव शाखिनां पश्यन्ति पत्राणि हरीति सर्वत. ॥ २३ ॥

## १३—बन्धसंसर्गः । ३ ।

१३ यत्र द्वयोरन्वितयोरपूर्वं द्वियोगजं धर्ममुदेति किन्तु ।
अन्योन्यमन्योन्यहृतं स्मृतं सत् पृथक् स्वतन्त्रं न भवेत् स बन्ध. ॥ २४ ॥
यथाप्सु वायु स्रवते स खण्डशो यदोदकैरावियते स बुद्बुदः ।
न चावृतिस्तु दृष्यति चेत् तदोभयं संसृज्य बद्धं भजतेति फेनताम् ॥ २५ ॥
दुग्धं प्रतप्तं यदि शीतवायुनाऽभिभूयते वायुरयन्तु बध्यते ।
दुग्धस्य वायोरपि बन्धनान्मिथ. शार. समुद्भूय पृथग् विजायते ॥ २६ ॥
अग्निः क्रमादुत्क्रमते रसाद्यन्, वायुः क्रमादन्तरुपैति संदधत्, ।
वायोः स्वयोग्ये हि रसेनु बन्धनादयं रसस्तत्र शारः प्रजायते ॥ २७ ॥

## १४ स्वरूप—संसर्गाणामुदाहरणम् ।

१४ तृणेषु बन्धादिह दुग्धमस्मिन् जलं विभूत्या, द्रवताऽम्बु योगात् ।
दुग्धे तृणं वृत्तिमदाहितं चेदेकत्र संसर्गचतुष्कमित्थम् ॥ २८ ॥
स्वरूपसंसर्गिनलब्धरुद्धधात्मनः स्वरूपेऽस्य तथा स्वभावे ।
सतौ च वृत्ता स्वयमेव भेदः प्रवर्तते तेन च वस्तुभेदः ॥ २९ ॥

## १५ वृत्तित्वसंबन्धनिर्देशः।

१५ स्वरूपसंबन्धनिशाश्वतयो रसे बलानामुदिता इतीत्थम् ।
सर्गा असर्गाश्च तथात ऊर्ध्वं वृत्तित्वसंबन्धविधा प्रदर्श्याः ॥ १ ॥
यत्राश्रितस्याश्रयतोऽन्वयेन संसृज्य नापूर्वमुदेति किञ्चित् ।
यत्राश्रितं स्वाश्रयनिरपेक्ष्यात् प्रवर्तते कर्मसु वृत्तिता सा ॥ २ ॥
यथा हि पथ्यस्य जनस्य गच्छत पन्था निमित्तं ध्रुवमाश्रयत्वत ।
न चरमप्येव गति-स्वरूपगो वृत्तित्वमेवं तदुदाहरन्ति हि ॥ ३ ॥
यथायमाकाशगत समीरणो व्याप्नोति चाकाशमशेषविस्त्वपि ।
न वायुनाकाशमिदं विलिप्यते तथाखिलं स्याद्रसवृत्ति तद्बलम् ॥ ४ ॥

## १६—सामान्यवृत्तित्वम्। असंसर्गो वृत्तित्वसंबन्धः।

१६ रसे बलं, सर्वबले रसो वा, सदाऽन्वितं रूपमिहास्ति शश्वत् ।
तथापि मात्रा नियमस्तदानीं सामान्यवृत्तित्वमिदं न सर्गः ॥ ५ ॥
यथा वने सन्ति मृगादिजन्तवो लुब्धका वा शतशः सहस्रशः ।
असद्भिरेतैर्न, वनस्य हीयते वनं विनापि स्युरमी यतस्ततः ॥ ६ ॥
यथेह, यत्र च क्व विश्वलोके ब्रह्माण्डचक्रेऽखिलमेतदास्ते ।
सामान्यवृत्तित्वमिदं न तेभ्यो ब्रह्माण्डयोगादिह कोऽपि सर्गः ॥ ७ ॥

## १७ त्रयः संसर्गाख्या वृत्तित्वसंबन्धाः ३।

१७ आसक्त्युदारौ समवाय इत्थं वृत्तित्वसर्गोऽपि भवेत् त्रिधैव ।
तेन स्वरूपत्रययुक्तवृत्ति त्रयं षडेतेऽमृतमृत्युसर्गाः ॥ ८ ॥
स्वरूपसंसर्गियत्वादिहा मा विधीयतेऽनेकविध स भोक्ता ।
वृत्तित्वसंसर्गितयास्तु भोक्तुस्तस्या मनो भोग्यमुपस्थितं स्यात् ॥ ९ ॥

## १८—उदारवृत्तित्वम्। संसर्गः। १।

१८ बलस्य यस्यां रसवृत्तितायां सिध्य वसाधारणनैव तस्मिन् ।
निष्पन्दता वा रसलिप्तता वा न जायते सा तदुदारवृत्ति ॥ १० ॥
यथायमाकाशगत समीरो निर्लिप्त एव प्रचरत्यमुष्मिन् ।
भवत्यसाधारणतामुपेत रसभेदतस्तद्वदिहापि विद्यात् ॥ ११ ॥
यथा जलं पुष्करपत्रनिष्ठं निर्लिप्तमेव प्रचरत्यमुष्मिन् ।
भवत्यसाधारणतामुपेत वचिद्रूभूतं तद्वदिहापि विद्यात् ॥ १२ ॥

## १९—समवायवृत्तित्वम् । संसर्गः । २ ।

१९ यत्नस्य यस्यां रसवृत्तितायां सिद्धं पदद्वयमप्यद्यापि दूरे ।
निष्पन्दमस्मिन्नचलमितं स्याच्च संचरेत् सा समवायवृत्तिः ॥ १३ ॥
यथा पटस्तन्तुषु मृद्घटो वा मृत्स्वेव तिष्ठत्यवलम्बमानम् ।
निष्पन्दरुद्धं न ततः पृथक् स्यान्न चाश्रयं हन्ति तथेह विद्यात् ॥ १४ ॥
यथा गुणा द्रव्यगता अमुष्मिन् प्रतिष्ठिताः सन्त्यथ कर्मिनस्ते ।
निष्पन्दरुद्धा न ततः पृथक् स्युर्न चाश्रयं हन्युरिहापि तद्वत् ॥ १५ ॥
इहेदमस्तीति मतिः पृथक्त्वसामान्योऽपि चेत् सा समवायवृत्तिता ।
यथा प्रदीपेऽर्चिरुपैति, शाखिनो वने, सरस्यम्बु, मराळमृगता ॥ १६ ॥

## २०—आसङ्गवृत्तित्वम् । संसर्गः । ३ ।

२० यत्नस्य यस्यां रसवृत्तितायां यत्नेन लेपः पुरुषेऽत्र सिद्ध्येत् ।
लेपाच्च तस्यावरणाद् विकारः स्यादात्मनः सा खलु सङ्गवृत्तिः ॥ १७ ॥
यथाऽऽहितं सैन्धवखिल्यमप्सु व्याप्नोति चाप्याकुरुते विलिम्पत् ।
रूपाद्रसाद्वा विकरोति तोयं ह्यासक्तिवृत्त्यात्मगतं च तद्वत् ॥ १८ ॥
यथा विशुद्धस्य पटस्य रञ्जनादन्तर्बहिस्तन्तुविकार ईक्ष्यते ।
तद्वल्लेपावरणात् तथात्मनो विकार आसक्तिवशेन जायते ॥ १९ ॥

## २१—वृत्तित्वसंसर्गोदाहरणानि ।

२१ पत्रेऽन्तरे या सहजास्ति लेखा मत्स्यादिकृत् सा च बहिर्दृढा या ।
छाया मयूखादिकृता च लेखा क्रमेण सक्तिः समवाय्युदारौ ॥ २० ॥
अर्थोऽनपेक्षे प्रभवत्युदारत्ता प्रवाहस्य नाम स्मरणं न संदिक्रया ।
संस्कारभावे समवाय इष्यतेऽथासक्तिरस्य व्यसनेषु जायते ॥ २१ ॥
यन्नायमभ्यस्यति गद्यपद्ये तद् संस्क्रियास्मिन् समवेति तद्वत् ।
स्याद्धारणाध्यानसमाधियोगात् स संयमो योगबलानि चास्मिन् ॥ २२ ॥
यज्ञप्रभावाद् भजमान आत्मा संपद्यते हि द्विविधस्तयोः स्यात् ।
साँस्कारिकत्वात् समवाय इत्थं सर्वत्र सम्बन्धगतिं प्रविद्यात् ॥ २३ ॥

## २२—कर्म्मात्मनि वृत्तित्वसंसर्गत्रयम् ।

२२ तथैककर्मात्मनि तस्य सक्तिरुदारवृत्त्यैव हि संनिधत्ते ।
उदारसक्तया हि परः स्वभावादाविश्य विश्वं स बिभर्ति नित्यम् ॥ २४ ॥
कार्य्यप्रसूति समवायवृत्त्या ह्येकमिकत्वे समवायवृत्तिः ।
ततोऽक्षरस्यैव तु कारणत्वं परस्य नैतद् समवायिभेदात् ॥ २५ ॥

आसक्तिवृत्यैव भवेद् विकारो न त्वक्षरे नापि परे त्रिकारः ।
त्रैकर्मिके सकृचु पपत्तितोऽयमसङ्ग आत्मा स परोऽक्षरश्च ॥ २६ ॥
उदार एवं समवाय एवं व्यासक्तिरेवेत्यिति वृत्तितेयम् ।
त्रिधापि कर्म्मात्मनि कर्म्महेतो प्रवर्तते शुद्धरसे तु नास्ति ॥ २७ ॥
पर्य्याप्तिवृत्तित्वविशेषभेदाश्चतुर्विधा एवमिहोपदिष्टा
अत परं पश्च निदर्शयामोऽन्यामक्तिवृत्तित्वविधा असम्यां ॥ २८ ॥

## २३—उद्दृढसम्बन्धभेदाः ( संहिताः ) ।

२३ भूतप्रतिष्ठं क्वचिदस्ति भूतं प्राणेन वा स्याद्विधृतं च भूतम् ।
प्राण क्वचित् प्राणधृतोऽथ वा स्यात् त्रेधा तदित्थं प्रभवत्युदूढम् ॥ १ ॥
अन्योन्यतश्चेद्विधृतिस्तदेक प्राणद्वयोरूढमिद यलिष्टम् ।
प्राणस्य भूते विधृतिस्तु मध्यं भूतद्वयोरूढमिद निकृष्टम् ॥ २ ॥
यच्छर्करापूर्णचयोऽस्ति तस्मिन् चूर्णानि भूप्राणविधारितानि ।
अथ स्थचूर्णतु तपूर्णचूर्ण प्रतिष्ठित नो विधृत मिथस्तत् ॥ ३ ॥
ये चैकलोष्टे परमाणव स्युस्तेषामणूनां हि परस्परेण ।
प्राणा उदूढा अथवत्यमासक्त यासाद्धेते सयुजोऽणव स्यु ॥ ४ ॥
यथा हि तैल च जल च योगेप्यमिश्रमन्योन्यगत विभाति ।
प्राणास्त्रया प्रह्लगताश्च तद्वत् तिष्ठन्त्युदूढा सयुजोऽप्यमिश्रा ॥ ५ ॥
त्रय समुद्रा यजुषामिहाग्निरर्चा महोक्थ च महाव्रत तु ।
साम्ना त एते त्रिविधा समुद्रा उदूढवृत्त्येव सहस्थिता स्यु ॥ ६ ॥
एवं तदेकैकसमुद्रमध्ये महान्ति चोक्थानि महाव्रतानि ।
अर्काश्च तानाहुरुदूढवृत्त्या सह स्थितान्यत्र परस्परेण ॥ ७ ॥

## २४—कोशाधानम् ।

२४ अथान्तरिक्षोदर एष पृथ्व्या वुध्नोऽस्ति कोशो वसुधानकोश ।
द्यौरुत्तरं तस्य बिल दिशास्तास्तत्स्रक्त्यो विश्वमिदं हि तत्स्थम् ॥ ८ ॥

## २५—आरण्यकीयसंहिताभेदास्त्रिखण्डाः ।

२५ उदूढ सम्बन्ध इहोच्यते य स्ता संहितामाहुरिहेतरया ।
अङ्गानि च त्रीणि वदन्ति तस्या ससंहिते ह्युत्तर पूर्वरूपे ॥ ९ ॥
स्यात् पूर्वरूपं पृथिवी तथा द्यौ स्यादुत्तरं रूपमथेष वायु ।
स्यात् संहितेत्याह तु शूरवीरो माक्षव्य आकाशमवैश वायुम् ॥ १० ॥
आगस्त्य इत्याह समानमेतद् द्वय यदाकाशमथैष वायु ।
इत्थ निरुक्ता ह्यधिदैवतं तान्यथ्या ममप्येवमुदाहरन्ति ॥ ११ ॥

याद् पूर्वरूपं मन उत्तरं स्याद् वागुत्तरं वा मन एव पूर्वम्।
स्यात् संहिता प्राण इहेति माण्डूकेय प्रवदन्त्यपि सूरयोऽपि ॥ १२ ॥
या संहिता प्राणमनोऽनयोर्भि सा प्रविशाह्यस्यरथेन तुल्या।
उद्गमनेव समस्तमेतद्विदं कश्चिन् नसरन्तीह नित्यम् ॥ १३ ॥

## २६—शाकल्यसंहिताभेदाश्चतुःखण्डाः।

अथेष शाकल्यमहर्षिरस्या अङ्गानि चत्वारि निरिच्य वक्ति।
यत्पूर्वरूपोत्तररूपसन्धिसन्धानभिस्तानि पृथग् विभान्ति ॥ १४ ॥
पृथ्वी तथा द्यौरथ वृष्टिरेवं पर्जन्य इत्थं ह्यधिदैवत तत्।
अध्यात्ममप्येवमिदं वदन्ति यतोऽस्ति सर्वं पुरुषोऽयमाद्यम् ॥ १५ ॥
तस्याथ ऊर्ध्वं विदले भवेतां तत्रोत्तरं द्यौरधरं तु पृथ्वी।
तदन्तरं खं तु यथान्तरिक्षं प्राणास्तिमहामुत्र यथास्ति वायु ॥ १६ ॥
ज्योतींष्यपि त्रीणि यथा ह्यमुष्मिंस्तथैव चास्मिन् पुरुषेऽपि सन्ति।
सूर्योऽस्ति चक्षुर्हृदय तु विद्युन्नो ह्यपस्येऽग्निरिहावभाति ॥ १७ ॥

## २७—तारुक्ष्यसंहिता। सामसंहिताख्या।

२७ अथाह तारुक्ष्यमहर्षिरित्थं वागस्ति रूपं हि रथन्तरस्य।
प्राणस्तु रूपं बृहतस्तयो सन्धीयेत रूपेण हि संहितेयम् ॥ १८ ॥
धातु र्घ तानात्सनितुश्च विष्णो रथन्तरं कश्चिदुदाजहार।
धातुर्घु तानात्सनितुश्च विष्णोरनेश्च कश्चिद् बृहदाचकार ॥ १९ ॥

## २८—कौण्ठरव्य संहिता। अवरोत्तराख्या।

२८ वाङ् प्राणतोऽसौ पवमानतोऽसौ विद्वांश्च दवस्थ ते द्युलोकात्।
स ब्रह्मणेत्याह तु कौण्ठरव्यो या संहिता सा ह्यवरोत्तरा स्यात् ॥ २० ॥
पञ्चालचण्डस्तु महर्षिरेषा वाक्संहितेत्याह चराचराणाम्।
वाचैव सर्वं त्विदमस्ति वाचा सन्धीयतेऽन्योन्यमिदं समस्तम् ॥ २१ ॥
छन्दांसि वेदा इतरे च सन्धीयते हि वाचाऽस्त्यनथा तदैक्यम्।
वाचैव मित्राण्यपि सर्वभूतान्यमूनि वा संदधतीह सर्वं ॥ २२ ॥

## २९ प्रतर्दन संहिता। द्विखण्डा।

२९ प्रतर्दन पश्यति यावदेष प्रभाषते प्राणिति नैव तावत्।
यावत्तु स प्राणिति नैव तावत् प्रभाषतेऽन्योन्यतदाहुति स्यात् ॥ २३ ॥

यत्र त्वप्रीतेऽप्यथ भासते वा प्राणस्तदा वाचि तदेक्यमेति ।
तूर्ष्णीं स आस्तेऽप्यथ यत्र शेते प्राणे तदा वागियमेक्यमेति ॥ २४ ॥
एकः सुपर्णोऽस्ति समुद्रमध्ये स एव विश्वं भुवनं विचष्टे ।
विशुद्ध दृष्ट्या तमपश्यमन्ते माता च तं लेढि स मातरं च ॥ २५ ॥

## ३० अदितिसंहिता चतुःखण्डा ।

३० प्रजापतिश्चादितिसंहितायाः अङ्गानि चत्वारि पृथग् विवक्ति ।
जाया हि पूर्वं पतिरुत्तरं स्यात् सन्धानसन्धी जननप्रजे स्त ॥ २६ ॥

## ३१ तित्तिरिसंहिता । चतुःखण्डा ।

३१ अङ्गानि चत्वारि च संहितायामाचक्षते तित्तिरयोऽपि तद्वत् ।
तत्पूर्वरूपोत्तररूपयुग्मं सन्धिश्च सन्धानमिति द्वयं च ॥ २७ ॥
तत्पूर्वरूपं प्रतियोगि यत्स्याद्यथानुयोग्युत्तररूपमाहुः ।
तदन्तरे तिष्ठति य स सन्धिः सन्धानमेतत् प्रथनन्धि सूत्रम् ॥ २८ ॥
पृथ्वी तथा द्यौरिदमन्तरिक्षं वायुस्तथेति ध्रियतेऽधिलोकम् ।
अग्निस्तथादित्य इमास्तथापोऽधिज्योतिष वैद्युत इत्यवेहि ॥ २९ ॥
आचार्यको माणवकश्च विद्याऽथाध्यापनं चेत्यधिविद्यमूह्यम् ।
अधिप्रजं तानि भवन्ति माता पिता प्रजाऽथो जनन क्रमेण ॥ ३० ॥
अध्यात्ममेतान्यधरहनुर्योत्तराहनुर्यास्त्यथ वाक् च जिह्वा ।
इत्थं तु सर्वत्र चतुष्टयं तत् संभावयन्ति क्रमशो यथार्थम् ॥ ३१ ॥

## ३२ बाभ्र संहिता-एकायनसंहिताख्या ।

३२ शारीरकश्छान्दस एष वैदिको महानपीथं पुरुषाश्चतुर्विधाः ।
अस्मिन् शरीरे निवसन्ति संहिता तत्रैव बाभ्रोऽनुविधं समीक्षते ॥ ३२ ॥
शारीरको योस्त्यशरीर आत्मा स प्रज्ञ एकोस्ति रस शरीरे ।
अकार एवास्ति रस स आत्माऽभिप्रेयते छन्दसि वाङमयेऽपि ॥ ३३ ॥
येनैव वेदानिह वेद तस्य ब्रह्मा रसो वेदमये स आत्मा ।
संवत्सरोऽन्य पुरुषो महानादित्यो रसस्तस्य मत पुराणे ॥ ३४ ॥
भूतानि पूर्वाणि विनाशयत्यैक्याभावयत्येव नवानि तानि ।
स एव संवत्सर एव देह स्थितो महापूरुष उक्त आत्मा ॥ ३५ ॥
प्रज्ञात्मको वर्ष्मणि योऽशरीरो यश्चैष आदित्य इहैकमेतत् ।
ततो निरुक्तोऽखिलजङ्गमानां स स्थावराणामपि सूर्य आत्मा ॥ ३६ ॥

ऊर्ध्वं दिवो यद् यदवाक् पृथिव्यां द्यावापृथिव्यौ च यदन्तरास्ति ।
भूतं भविष्यच्च भवच्च सत्र यदस्ति तं प्राण इति ब्रुवन्ति ॥ २८ ॥
तस्मिन् समस्तं जगदस्तदोतं प्रोतं स चाकाशगतोऽयमोत ।
प्रोत स चाकाश इहाक्षरे स्यात् तस्मिन्ननुस्यूत मिदं समस्तम् ॥ २९

## ३७— ग्रहातिग्रहसम्बन्धः

अध्यात्मिकानामधिभूतधर्मैरासंसर्गो येन निरूपित स्यात् ।
स हि ग्रहातिग्रहमात्र उक्तोऽध्यात्मं ग्रहोभूतमतिग्रह स्यात् ॥ ३० ॥
प्राणो ह्यपानेन च वाक् तु नाम्ना रूपेण चक्षू रसना रसेन ।
श्रोत्रं तु शब्देन मनस्तु कामैः स्पर्शेन तु त्वक् किल कर्मणा दो ॥ ३१ ॥
ग्रहो गृहीतस्तदतिग्रहेणेत्यतिग्रह संस्रवते ग्रहोऽसौ ।
इत्थं जरत्कारसुतार्तभागप्रश्ने पुरोवाच स याज्ञवल्क्य ॥ ३२ ॥

## ३८—अभ्यूढसम्बन्धः ।

छन्दोमितानीह पदानि यानि तेष्वेव गेयानि निवेशितानि ।
प्रगीयतेऽभ्यूढमिदं हि यच्च गेयं तदभ्यूढमिदं प्रविधात् ॥ ३३ ॥

## ३९—पड्विकल्पसंबन्धः ।

स्वरूपसम्बन्धवशाच्च नित्यं वृत्तित्वसम्बन्धवशाच्च भूय ।
रसे बलं सर्वविधं प्रदृष्टं ततो विकल्पान् षडिमानि होद्यु ॥ ३४ ॥
धर्मं त्वकर्मस्थमकर्म कर्मसदं भिन्नद्वयं तत् तदभिन्नमद्वयम् ।
अकर्म मियेत न कर्म मियतेऽध्यासोऽमृते स्यादिति षड् विकल्पना ॥ ३५ ॥
घटो मृदि स्यात् मृदिव घटे स्याद् भिन्नौ तु तौ वा मृदियं घटो ना ।
भिन्ना तु मृन्नैव घटस्तु भिन्नो घटो मृदध्यस्त इतीव विद्यात् ॥ ३६ ॥

## ४० सर्वविधसंसर्गत्यागान्मोक्षसिद्धिः ।

बले बलाना च रसे बलानां सम्बन्धभेदा य इहोपपन्ना ।
त इत्थमष्टादशधा निरुक्तास्तेषां विमोकादपवर्गमाहुः ॥ ३७ ॥
बलस्वरूपेण रसोऽवभासते रसस्वरूपेण बलं प्रवाहि वा ।
नान्योन्यमन्योन्यविनाकृतं भवेत्र चान्यतोऽन्यद् भवति क्वचित् पृथक् ॥ ३८ ॥
संसृज्यते वा प्रतिसृज्यते वाऽनुसृज्यते वाप्यमृते स मृत्यु ।
सर्गं स मोक्षस्त्वमृताद्विमोको मृत्यो स खण्डस्य न चाखिलस्य ॥ ३९ ॥
मितस्य कस्यापि रसस्य मायाव्यपायत संभवतीह मुक्ति ।
न तेन सर्वस्य मितस्य मायामुक्ति प्रकल्प्या प्रतिभागभेदात् ॥ ४० ॥
कुत स आत्मा कुत एव शान्ति कुतश्च संसर्गविशेषसिद्धि ।
कुतश्च सृष्टिश्च इत्यमेतन्न वेद्मि तद् वेद्मि यथा यदस्ति ॥ ४१ ॥

सम्बन्धतालिका ।

| | | | | |
|---|---|---|---|---|
| १ | १ | स्थानविरोधः | असंसर्गौ २ | कर्म्मणि कर्मसम्बन्धाः ५ |
| २ | २ | सामञ्जस्यम् | | |
| ३ | ३ | ऐकात्म्यम् | संसर्गौ २ | |
| ४ | ४ | ऐकभाव्यम् | | |
| ५ | ५ | भक्ति | असंसर्गः २ | |
| | | | | |
| ६ | १ | अलक्षणम् | असंसर्गः १ | ब्रह्मणि कर्म्मणां स्वरूप-सम्बन्धा ४ |
| ७ | २ | विभूति | संसर्गः ३ | |
| ८ | ३ | योगः | | |
| ९ | ४ | बन्धः | | |
| १० | १ | अमित वृत्तिता | असंसर्गः १ | ब्रह्मणि कर्म्मणां पर्य्याप्ति-वृत्तिता ४ |
| ११ | २ | उदारः | संसर्गाः३ | |
| १२ | ३ | समवायः | | |
| १३ | ४ | आसक्ता | | |
| | | | | |
| १४ | १ | संहिता | असंसर्ग. ५ | ब्रह्मणि कर्मणाम् अन्वाभक्ति वृत्तिता ५ |
| १५ | २ | दहरोत्तर भाव | | |
| १६ | ३ | ओत प्रोत भाव | | |
| १७ | ४ | ग्रहातिग्रह भावः | | |
| १८ | ५ | अध्यूढ भाव | | |

इति पूर्णद्विसत्ये ब्रह्मकर्मसंबन्धाधिकारो द्वितीयः पूर्णः ॥

# अथ ब्रह्मकर्म्मभ्यां सृष्टिक्रमाधिकारः ॥ २

## पुरुषत्रयावतार--प्रकृतित्रयावतारौ ॥

### १—पुरुष प्रकृति समन्वयात् सृष्टिः ॥

यद् ब्रह्म यत्कर्म सह द्वयं तत् पूर्णद्विसत्यं न ततोऽन्यदस्ति ।
ब्रह्मैव कर्मापि समन्वितत्वादनेकधा ते प्रवदन्ति लोकाः ॥ १ ॥
ब्रह्मेदमात्मा पुरुषोऽस्ति तस्मिन् यत्कर्म सेयं प्रकृतिः प्रकृत्या ।
सृष्टे जडेऽस्मिन् अद्धयाचिदात्माविष्टः पुरु स्यन् पुरुषः स उक्तः ॥ २ ॥
सृष्टेस्तु यास्ति प्रकृतिः स योनिर्बलं तदुक्तं तदनेकरूपम् ।
यतोऽस्त्यनेकावयवं ततस्तत्पुरं पुरस्थ पुरुषो रसः सः ॥ ३ ॥
पुरप्रभेदात् पुरि संनिविष्टः स एष आत्मा पुरुषोऽप्यनेकः ।
समन्वयात् तस्य यथा प्रकृत्या सृष्टिस्तयाऽत्र प्रतिपादयामि ॥ ४ ॥

### २—पुरुष प्रकृत्योः संबन्धेऽप्यसमन्वये सृष्ट्यभावः ।

२ रसे प्रसुप्तं तु रसस्वरूपं बलं तदानीमनिरुक्तमेकम् ।
ब्रह्मैव नातोऽन्यदतो द्वितीयाऽसमन्वयात्तत्र न कोऽपि सर्गः ॥ ५ ॥
उद्बुद्धमस्मिन् बलमस्ति यावद्रसेऽस्ति तस्यामितवृत्तिता चेत् ।
सति द्वितीयेऽप्यमितिस्वभावात् समन्वयो नास्ति ततो न सर्गः ॥ ६ ॥
न यत्र मानानियमस्तयोः स्यात् सम्बन्धसत्वेऽपि न तत्र सर्गः ।
असत्तमस्मिन्नमृतं हि मृत्यौ स्वतन्त्रमाभाति तथा स मृत्युः ॥ ७ ॥

### ३—आत्मयोन्योरुत्तरोत्तरमुत्पत्तिक्रमः ।

मितोऽमिते नाथ निरूढमात्रयाऽमृतेन मृत्युः क्रमते यदा क्वचित् ।
तदात्र सम्बन्धविशेष इष्यते संसर्गसंज्ञस्तत एव सृज्यते ॥ ८ ॥
छन्दः पदेनेह निरूपयिष्यते मितिश्चतुर्धाऽप्यथ सप्तधाऽथवा ।
अनेकधा छन्द इदं हि दृश्यते यदीहते वस्तु विभिन्नलक्षणम् ॥ ९ ॥
मितो मितेनाथ निरूढमानो निरूढमात्रेण समन्वितश्च सः ।
अथाशितिश्चेत्परतः परेण तत्रैकमेयादितरस्वरूपम् ॥ १० ॥
यत्तद्द्वयाद्यतीह किञ्चित् सोऽत्ता यदाधीयत एतदाद्यम् ।
यदाद्यमत्रोभयमेकभूतमाप्यायतेऽत्तैव तदा न चाद्यम् ॥ ११ ॥
बलं रसान्तर्गमितं रसे चेदाधीयते तत्र बली रसः स्यात् ।
रसो बलान्तर्गमितो बले चेदाधीयते तद्रसवद्बलं स्यात् ॥ १२ ॥
रसस्वरूपेण बलेन चात्मा विधीयते भुक्तमिदं बलं तत् ।
बलस्वरूपेण रसेन योनिर्भवत्यदो भोक्तृबलं रसस्य ॥ १३ ॥
रसप्रधानत्वात् स रसो यथात्मा बलं रसाधानतया तु योनिः ।
आत्मांशयोन्यंशसमन्वयेन तथान्य आत्मा च तथान्ययोनिः ॥ १४ ॥

रसेन भुक्ते हि बले बलं तद्रसस्वरूपं यदभूत् स आत्मा ।
बलेन भुक्ते तु रसे रसोऽसौ बल स्वरूपोऽभवदेष योनिः ॥ १५ ॥
स्वरूप संसर्ग इह त्रिधा स्याद्बन्धश्च योगश्च तथा विभूतिः ।
त्रिभिः स्वरूपानुगतैः प्रसर्गैरात्मा च योनिश्च पृथग्भवेताम् ॥ १६ ॥

## ४–रसबल समन्वयाद् रसावतारोऽव्ययपुरुषः ।

४ तथायमात्मा त्रिविधः स्वरूपत्रैविध्यतस्तावदुदेति सर्गात् ।
मनो विभूत्या भवतीह योगात् प्राणोऽथ बन्धादिह जायते वाक् ॥ १७ ॥
प्राणे मनोऽभ्यूढमयं च वाचि प्राणस्तदित्थं क्रमशः परस्मिन् ।
पूर्वं तदभ्यूढमतो न सर्गः सम्बन्धसत्त्वेऽप्यसमन्वितत्वात् ॥ १८ ॥
कैश्चित्तु तेषां पृथगात्मनां मिथः सम्बन्ध उक्तः समवायसंज्ञकः ।
अन्योन्यतस्ते समवेत रूपिणो विनान्यतोऽन्यस्य न च स्थितिः क्वचित् ॥ १९ ॥
त्रयस्त्विमे ये पुरुषा निरुक्ताः प्राणो मनो वागिति संप्रतीताः ।
अन्योन्यसाहित्यकृतैकमूर्तिः स्यादव्ययः सोऽस्ति रसावतारः ॥ २० ॥
स वाङ्मयः प्राणमयो मनोमयो य एक आत्मास्ति सनातनः प्रभुः ।
स उत्तमः सोऽव्ययसंज्ञकः परः प्राणो मनो वागिति तस्य विक्रमाः ॥ २१ ॥

## ५–बलरससमन्वयाद् बलावतारो महान् योनिः ।

५ अथाश्रिते तत्र रसे बलेन रसः स जायेत बलस्वरूपः ।
सत्त्वं विभूत्याथ रजस्तु योगात् तमस्तु बन्धात् त्रिविधः स योनिः ॥ २२ ॥
सत्त्वं रजस्येव रजस्तमस्यभ्यूढं तदित्थं क्रमशः परस्मिन् ।
पूर्वं तदभ्यूढमतो न सर्गः सम्बन्धसत्त्वेऽप्यसमन्वितत्वात् ॥ २३ ॥
त्रयो गुणाः सत्त्वरजस्तमांसि भवन्ति मूर्त्यां रसतारतम्यात् ।
अन्योन्यसाहित्यकृतैकमूर्तिर्बलावतारो महदुच्यते सः ॥ २४ ॥

## ६–अव्ययमहत्समन्वयाद् रसावतारोऽक्षरपुरुषः ।

## महदव्ययसमन्वयाद् बलावतारोऽहंकारः ।

६ अथाव्यये वाचि रसे महद्बलं स्वरूपसम्बन्धवशेन सृज्यते ।
सर्गो द्विधा स्यादितरेतराशनाद्रसः ऽक्षरोऽहंकरणं बलं तथा ॥ २५ ॥
मनो विभूत्या भवतीह योगात् प्राणोऽथ बन्धादिह जायते वाक् ।
अन्योन्यसाहित्यकृतैकमूर्तिः स्यादक्षरः सोऽस्ति रसावतारः ॥ २६ ॥
सत्त्वं विभूत्याथ रजस्तु योगात् तमस्तु बन्धात् स बलावतारः ।
अन्योन्यसाहित्यकृतैकमूर्तिः प्रजायतेऽहं कृतिसंज्ञयासौ ॥ २७ ॥

## ७–अक्षराहंकाराभ्यां रसावतारः क्षरो बलावतारो विशेषश्च ।

७ अथाक्षरे वाचि रसेऽप्यहंकृतिः स्वरूपसम्बन्धवशेन सृज्यते ।
सर्गो द्विधा स्यादितरेतराशनाद्रसः क्षरस्तत्र बलं विशेषकाः ॥ २८ ॥

मनो विभूत्या भवतीह योगात् प्राणोऽथ बन्धादिह जायते वाक् ।
अन्योन्यसाहित्यकृतैकमूर्तिः क्षरः स जायेत रसाद्बलात् ॥ २९ ॥
सत्वं विभूत्याथ रजस्तु योगात्तमस्तु बन्धात् स बलाद्रसात् ।
अन्योन्यसाहित्यकृतैकमूर्तिर्विशेषसंज्ञोभवतीह मृत्युः ॥ ३० ॥
अथाक्षरे वाचि रसे विशेषकः स्वरूपसम्बन्धवशेन सृज्यते ।
किन्तु क्षराद्वाऽथ विशेषतोऽपि वाऽतिरिक्त्य रूपं न विजायते ततः ॥ ३१ ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | ब्रह्म | | | | | | | |
| | ब्रह्म = रसः पुरुषः | | | | कर्म = बलं प्रकृतिः | | | |
| असंसृष्टत्वात् | रसो बल समन्वितः | विभूत्या | योगेन | बन्धेन | बलं रस समन्वितम् | विभूत्या | योगेन | बन्धेन |
| | निशुद्धयो स्वरूप संसर्गे अव्ययः | मन. | प्राण. | वाक् | | सत्वम् | रजः | तमः |
| | अव्ययः | | | | महत् | | | |
| असंसृष्टसंसर्गात् | अव्ययो महत्समन्वित | विभूत्या | योगेन | बन्धेन | महदुत्तम समन्वितम् | विभूत्या | योगेन | बन्धेन |
| | संसृष्टयोरग्रन्थिकयोः स्वरूप संसर्गे अक्षरः | मन | प्राण· | वाक् | | सत्वम् | रज | तमः |
| | अक्षरः | | | | अहंकारः | | | |
| संसृष्टसंसर्गात् | अक्षरोऽहंकार समन्वितः | विभूत्या | योगेन | बन्धेन | अहंकारोऽक्षर समन्वित· | विभूत्या | योगेन | बन्धेन |
| | संसृष्टयोः सग्रन्थिकयो स्वरूप संसर्गे क्षरः | मन | प्राण. | वाक् | | सत्वम् | रजः | तम |
| | क्षरः | | | | विशेषः | | | |

## ८--अव्ययाक्षरक्षराणां पुरुषाणां महदहंकार विशेषाणां प्रकृतीनां चान्योन्य वैधर्म्यम् ।

८ स्वरूप संसर्ग इह द्विधायं विशुद्धकल्तोऽथ सृष्टकल्तः ।
संसृष्टकल्तोऽपि पुनर्द्विधा स्यात् सग्रन्थिकाग्रन्थिकभेदकल्तः ॥ ३१ ॥
सर्गैस्त्रिभिः शुद्धनिरूपितैस्ते भवन्ति वाक् प्राण मनांसि यानि ।
तैरात्मभिर्य प्रथमः प्रवृत्तः परः स आत्माऽव्यय उत्तमश्च ॥ ३२ ॥
सर्गैस्त्रिभि सृष्टनिरूपितैस्तैर्भवन्ति वाक्प्राणमनांसि यानि ।
अग्रन्थिकैस्तैरपरः प्रवृत्तोऽक्षरः स आत्मा स परात्परश्च ॥ ३३ ॥
संसृष्टिसंसृष्टनिरूपितैस्ते भवन्ति वाक्प्राणमनांसि यानि ।
सग्रन्थिकैस्तैरपरोऽयमात्माऽभवत् तृतीयः क्षर इत्यनित्यः ॥ ३४ ॥
एवं स योनिर्महदाख्ययाऽभूत् संशुद्धयोरेव तयोः प्रसर्गात् ।
संसृष्टयोश्चाप्यनयोः प्रसर्गादभूदहंकार इतीह योनिः ॥ ३५ ॥
संसृष्टिसंसृष्टसमन्वयाद्याभवद्विशेषः क्षरयोनि रेपः ।
सग्रन्थिकस्तत्र विशेष एषोऽसत्यग्रन्थि चाहंकरणं महच्च ॥ ३६ ॥

## ९--कार्यब्रह्मणामिन्द्र वाय्वग्नीनां स्वरूप निर्देशः ।

१ त्रयोऽप्यमी स्युः पुरुषाः पृथगत्रिधामनोमया. प्राणमयाश्च वाङ्मयाः ।
तद्वीर्यभूतानि तु यानि कार्यवद् ब्रह्माणि तानि त्रिविधानि चक्ष्यतः ॥ १ ॥
सग्रन्थिकाग्रन्थिकशुद्धभेदात् त्रिधामनः स्यात् त्रिविधा तथा वाक् ।
प्राणस्त्रिधा स्यात् प्रथमं द्वितीये तेषां द्वितीयं तु पुनस्तृतीये ॥ २ ॥
त्रिभिः कृतस्तैः पुरुषस्त्रिधा सोऽवच्छिद्यते यो मनसा स इन्द्रः ।
प्राणेन वायुः पुरुषोऽथवाचा सोऽग्निस्त्रयस्ते त्रिविधाः पुनः स्युः ॥ ३ ॥
तेषामवद्धान्यपि चाव्ययानि शुद्धानि वाक् प्राण मनांसि यानि ।
तानि प्रतिष्ठा विधृतिश्च तद्वज्ज्योतिस्तथेति क्रमशः प्रथन्ते ॥ ४ ॥
ज्योतिर्मनः स्याद्विधृतिः पुनः स्यात् प्राण प्रतिष्ठापुनरत्र वाक् स्यात् ।
चिज्ज्योतिषि स्याद्विधृतौ तु मुत्स्यायतः प्रतिष्ठा तत एव सत् स्यात् ॥ ५ ॥
ज्योतिः प्रसाराय रसः प्रतिष्ठा त्वाकुञ्चनायास्ति रसोऽखिलेषु ।
भवेद्बले संतननं विधृत्या स्युरक्षराण्यायतनान्यमीषाम् ॥ ६ ॥

२ अथाक्षराण्याहुरिमानि चान्तर्यामी मनः सत्यमिदं तु सा वाक् ।
प्राणस्तु सूत्रात्मतया प्रसिद्धस्त्रिपूरुषोऽन्यः पुरुषास्त्रिमिस्तैः ॥ ७ ॥
एतानि सन्त्यायतनानि तेषां क्रमात् परस्यानिरूपितानाम् ।
ज्योतिर्गृहीतं भवतीदमन्तर्यामिण्यथो सत्यगता प्रतिष्ठा ॥ ८ ॥

सूत्रात्मलाभाद्विधृतेर्हि लाभो धर्मैस्त्रिभिस्तैरिह धर्मिणस्ते ।
ताः शक्तयोऽमी खलु शक्तिमन्तो न तैर्विनैषां कचिदात्मलाभः ॥ ८ ॥

३ प्रज्ञा मनः प्राण इहास्ति तेजो वाग्भूतमित्थं क्षरतोऽपि विद्यात् ।
क्षरेषु तिष्ठन्ति यदाक्षराणि नानात्वमेतान्युपयन्ति तेन ॥ १० ॥
परोऽक्षरो वा न विशेषकर्मा तस्मात्सदैकत्वमिमौ लभेते ।
ज्योतिः सरूपं बहुनास्ति नान्तर्यामी सरूपो बहुधा प्रपन्नः ॥ ११ ॥
यज्ज्योतिष क्वापि बहुत्वमन्तर्यामी क्वचिद्वा बहुधोदितः स्यात् ।
तथास्य चैकस्य सतोऽप्युपाधिक्षरस्य भेदाद्विभेदमाहुः ॥ १२ ॥
क्षरस्तु सर्वोऽस्ति विशेषकर्मा स्वतश्च उत्पद्यत एव नाना ।
प्रज्ञा सरूपाः पृथगुद्भवन्त्यो नदयन्त्यपूर्वाः पुनरुद्भवन्ति ॥ १३ ॥
प्रज्ञाधिमात्रा अपि भूतमात्रा प्राणाधिमात्रा बहवो भवन्ति ।
प्रज्ञाश्च भूतानि सदान्वितानि प्राणेषु देवेषु समर्पितानि ॥ १४ ॥

४ ज्योतिर्मयात्मग्रहणं मनः स्याज्ज्योतिर्मयं ज्योतिरिति त्रिधा तत् ।
प्राणस्त्रिधा स्याद्विधृतिर्विधर्ता विधर्तृमात्रग्रहणश्च तद्वत् ॥ १५ ॥
प्रतिष्ठितात्मग्रहणः प्रतिष्ठा प्रतिष्ठितात्मेति च वाक् त्रिधा स्यात् ।
सत्ता च सत् सत्यमिति त्रयी वाक् सत्ता प्रतिष्ठेति न भिद्यतेऽर्थः ॥ १६ ॥

| कार्यं ब्रह्मणि | | मनः | प्राणः | वाक् |
|---|---|---|---|---|
| परस्थाने अवद्धानि | | ज्योति | विधृतिः | प्रतिष्ठा |
| अक्षरस्थाने अग्रन्थिबद्धानि | | अन्तर्यामी | सूत्रात्मा | अव्यक्तसत्यम् |
| क्षरस्थाने ग्रन्थिबद्धानि | | प्रज्ञा (प्रज्ञामात्रा) | तेज (प्राणमात्रा) | भूतम् (भूतमात्रा) |
| देवता निर्देशः | | इन्द्रः | वायुः | अग्निः |

## १०—प्रकृतिविशेषाणां माया—महा माया योगमायानां स्वरूप निर्देशः ।

अथो रसे तत्र बलस्य सर्गादुदेति योऽयं विविधो विशेषः ।
इतः स आयाति नियाति स क्वेत्यजानता सा कथिताऽत्र माया ॥ १ ॥
सामान्यमाया महती च मायाऽन्या योगमायेति भवन्ति मायाः ।
त्रिधा प्रसिद्धा अथ योगमायां तां विष्णुमायामिति केचिदाहुः ॥ २ ॥

२ माया बलं ब्रह्मणि कर्म यत् तत् कर्मत्रिधा तत् त्रिविधास्ति माया ।
रसेऽमिते सा मितिरेव माया दिग्देश कालैरुपकल्पिता या ॥ ३ ॥
तत्रामिते सा हि मितिर्विरुद्धा कथं मितं स्यादमितं यदीदम् ।
असंभवन्तीमपि लोकयामो मायाऽत्र मिथ्येति वितर्कयामः ॥ ४ ॥
न वा सती सा न च वाऽसती सा स्वतोऽसती या परतः सती या ।
विरुद्धधर्मद्वययोगिनीयं मायाऽस्ति मिथ्येति वितर्कयामः ॥ ५ ॥
रसोऽक्रियश्चैकरसो बलं वा यत्रीरसं तत्र पृथक् प्रवृत्तिः ।
रसेन संसृज्य बलं प्रसूते मायाऽस्ति माताऽथ पिता स आत्मा ॥ ६ ॥
यतोमितिः सा महती तु माया बलं हि तन्नाम च कर्म रूपम् ।
बन्धाश्च योगाश्च विभूतयो वा मा च प्रमा च प्रतिमा च माया ॥ ७ ॥
परोऽवरो वाथ परावरो वा स ईश्वरो वा परमेश्वरो वा ।
मायावशादेव भवन्ति रूपाण्येतानि माया महती ततः सा ॥ ८ ॥

३ स्वरूपसंसर्गवशाद्रसे स्थितं बलं विशेषद्वयमत्र भावयेत् ।
मात्रां च संस्थां च ततः स मात्रया संसृज्यते तद्वदसौ च संस्थया ॥ ९ ॥
छन्दः स्वरूपं द्विविधं तदुक्तं या तत्र मात्रास्त्यथ याऽत्र संस्था ।
दिग्देशकालैः प्रमितिस्तु मात्रा छन्दो मितं तत्कृतवृत्तमाहुः ॥ १० ॥
जात्याकृतिव्यक्तिकृतिस्तु वर्णच्छन्दः कृतं तेन तु वर्णवृत्तम् ।
मात्राकृतं वर्णकृतं स्वरूपं यस्योच्यतेऽसौ पुरुषः प्रदिष्टः ॥ ११ ॥
निवार्यतौपाधिक एष मात्रा संसर्ग एते न रसस्य खण्डः ।
न वस्तुगत्या परिकल्पनीयो घटस्थिताकाशवदर्थ वाधात् ॥ १२ ॥
अणूनि रूपाणि बृहन्ति नानाविधानि मृत्योः स्वयमुद्भवन्ति ।
तत्सर्गरूपावरणेन पूर्णोऽखण्डामृतं खण्डवदेव भाति ॥ १३ ॥ १३ ॥
तस्यामितस्यापि मितिः कृतेयं माया समायाति वियाति चेयम् ।
मितिस्तु माया मित एव मायीश्वरोऽस्य मायामयमेव विश्वम् ॥ १४ ॥

४ रसे बलस्याथ भवन्ति संस्था संसर्गभेदास्त्रिविधाः प्रसिद्धाः ।
बन्धश्च योगश्च विभूतिरेते रसे भवन्ति त्रिविधा हि संस्थाः ॥ १५ ॥
बन्धक्रमेण प्रभवेदियं वाक् प्राणस्तु योगक्रमजो निरुक्तः ।
मनो विभूतिक्रमतः प्रवृत्तं संसर्गभेदात् त्रय आत्मसर्गाः ॥ १६ ॥
संसृज्य तस्मिन् प्रतिसृज्य भूयो यत्रैव नानात्वमुपैति मृत्युः ।
तत्राम्बमायाति वियाति तस्मात् तदम्बमस्मिन् महती हि माया ॥ १७ ॥
यदद्भुतं यत्वसदेव दारुणं यतः पृथग्मात्रमिवात्मनोऽर्यते ।
आशङ्कते चात्मनि विक्रिया यतो लोके तदभ्वं तदु यक्षमुच्यते ॥ १८ ॥
यत्पद्भुतं चासदिदं भयावहं ततः पृथक्त्वं पुनरिष्यमात्मनः ।
विभाव्यते ब्रह्मणि विक्रिया ततस्तद् ब्रह्मणोऽभ्वाजितयं प्रकल्पते ॥ १९ ॥

रूपं च तत्कर्म च नाम चेति प्रजापतेः प्राणि कर्मरूपात् ।
अयं शरीरं तदु यत्रयुक्तं पुनः पुनश्चाग्निप्रयतेऽमृतस्थम् ॥ २० ॥
स सर्वथाऽस्यां ध्रियतेऽमृते स्थितस्ततोऽमृतो मृत्युरथामृतं पुनः ।
यदामृतं नित्यमनेन मृत्युना रसः स तस्मादुरुरूपधर्मवान् ॥ २१ ॥

४ स्वरूपसंसर्गिफलं तु भावो भूतिन्यसंसर्गिफलं च कर्म ।
भावः स यन्नाम यदस्य रूपं मात्रा च संस्थेत्युभयं हि रूपम् ॥ २२ ॥
घटस्य यन्नाम घटस्य मात्रा संस्थेति रूपं च घटस्य भावः ।
घटत्वमुक्तं तदतः पृथक् स्याद् घटस्य कर्मेत्यविशेषु विद्यात् ॥ २३ ॥

५ ज्योति नियद्धं फलमस्ति रूपं प्राणेन संबद्धफलं तु कर्म ।
स्यात्प्राणसंबद्धफलं तु वाचा मायाधनानि त्रिविधानि तानि ॥ २४ ॥

६ तद् ब्रह्मणोऽस्य परपूरुषे च प्रयाहनित्यं ध्रियतेऽक्षरं वा ।
क्षरं त्वनित्यं भवतीह भावः स्यादप्यभावो रसविप्रकर्षात् ॥ २५ ॥
पूर्वोक्ततोऽपि प्रभवस्थया यः प्रतिष्ठयाऽभ्यर्थितयस्य योगः ।
स एव भावोऽथ तया वियोगो भवेदभावोऽप्युभयः स मर्त्यः ॥ २६ ॥
तदेषु भावेषु यदस्ति नानाविधत्वमुक्तः स विशेष एषः ।
तथैकभावेऽपि भवन्त्यनन्ता इमे विशेषा इति भावसिद्धिः ॥ २७ ॥
सा योगमायाऽन्वितयोस्तु कर्मणोः पूर्वं प्रतिष्ठे उभये निजाश्रयतः ।
यदि व्ययेते अथ चेत्र वा भवत्येका प्रतिष्ठेह न धाम्यगामिनी ॥ २८ ॥
अभ्वानि सर्वाणि तु योगतः स्युर्नायोगतः किञ्चिदुदेति रूपम् ।
बलस्थितामिच्छति योगमायां रसास्थिता स्यान्महती तु माया ॥ २९ ॥
द्वयोस्तु योगाय चिराय युक्तं स्थातुं तयैव च यानि युङ्क्ते ।
सा ब्रह्ममाया ऽपि च विष्णुमाया तेनैव माया क्रमशः पृथक् स्यात् ॥ ३० ॥
सा क्षैत्रमाया यदि चेद्बले द्वे युते क्षणादाप्य युते भवेताम् ।
जलोर्मयो वारिदरूपमग्निज्वाला यथोल्का दिवि विद्युतश्च ॥ ३१ ॥
खे नीलिमा भास्कर-चन्द्र तारा-पृथ्वी-समुद्राश्च महीधराश्च ।
एवं-विधा ये चिरमेकरूपा भावाः स्थिता सा किल विष्णुमाया ॥ ३२ ॥

१ बलद्वये या ऽधिकरोति लोके सा योगमाया महती तु माया ।
रसं बलं योजयते महत्यां तां योगमाया विविधा विजानन्ति ॥ ३३ ॥
सा योगमाया महती च माया विद्युद्धमाया च न भिद्यतेऽर्थः ।
यन्नाम यद्रूप यथास्य कर्माण्यपूर्वसंधापरचय माया ॥ ३४ ॥

## ११ मायाया रसबलपुरुषातिरिक्तत्वमतम् ।

११ नेयं रसो नापि बलं न पूरुषो माया तुरीयेति वदन्ति केचन ।
रसे बलं तत् पुरुषो द्वयोस्तयो मायास्थितेयं पुरुषद्वये भवेत् ३५ ॥

रसो बलानां पुरुषस्य ते द्वे आत्मास्त्यमुष्याः पुरुषौ पुनर्द्वौ ।
माया तु मिथ्या पुरुषस्तु सत्यानृतस्वरूपः प्रथमे तु सत्यम् ॥ ३६ ॥
रसो बलं वा परमार्थरूपे स पूरुषस्तु व्यवहारहेतुः ।
माया तुरीया प्रतिभासगम्या सर्वत्र तत्वं स रसो बलं वा ॥ ३७ ॥

## १२—मायोदाहरणम् ।

१२ मायामिहाकर्षति यां दिशं बलादन्यद्बलं तद्विपरीतदिक्क्रमात् ।
अभ्येति सं तं मणिमुत्तरोत्तरं तन्मायिकं कर्षणतः प्रभिद्यते ॥ ३८ ॥
पार्श्वाहतामत्रजलस्य वीची मायाबलाद् तिष्ठति नाभिभित्वा ।
आघाततः काचपदं त्रुटित्वा धारां त्रुटेः पार्श्वत एति मायाम् ॥३९ ॥
स्पर्शो रवो गन्धरसे च रूपं भवन्ति नानाबलसंघघातात् ।
असन्त्यकस्मादिह यद् स्फुरन्ति प्रत्युत्क्रमन्ते ऽपि च मायिकं तत् ॥ ४० ॥

## १३ कर्म्मस्थब्रह्मपरिचयः ।

१ ब्रह्मास्ति तत्प्रत्यय[1]साक्षिकं रसप्रदं[2] च पात्रं[3] च विवर्तं[4] लम्बनम्[5] ।
आलम्बनं[6] चायतनं[7] च सप्तधा तद्ब्रह्म पश्यामि तु कर्मसु स्थितम् ॥ १ ॥

२ तथाहि तत् प्रत्ययसाक्षिकं बलैः प्रतीयते द्रव्यवदुत्वणै गुणैः ।
भटद्रुमक्षेत्र जलार्चिरूपयैः सेना वनग्रामसरःप्रदीपवत् ॥ २ ॥

३ रसप्रदं ब्रह्म तु कर्मणि ध्रुवं निरात्मकं कर्म्मबलं न दृश्यते ।
आत्मा स सत्तारसमादधाति यो यतो घटः सन्नधुना पुरा त्वसन् ॥ ३ ॥

४ पात्रं बलस्यास्ति यथाम्भुनः घटास्तिलास्तु तैलस्य घृतस्य वा पयः ।
ब्रह्मेति वालम्बनमस्ति कर्मणां जलस्य बिन्दू रजसां मृदां यथा ॥ ४ ॥

५ उन्मीलितं चक्षुरिहान्धकारे न त्वात्मनोऽन्येष्ववलम्ब्यते तु ।
अथ प्रकाशे त्ववलम्ब्यते यद् गत्वा क्वचित् सोऽस्ति रसो बलस्थः ॥ ५ ॥
यद् गच्छतः शून्यधरातले स्यात् पातोऽथ पूर्णे तु पदावलम्बः ।
यदेव तत्रैव पदावलम्ब्य प्रवर्तते सोऽस्ति रसो ऽवलम्बः ॥ ६ ॥
जन्मान्ध एष क्रमते स्वहस्तौ स्पर्शाय विस्तार्य पुरः क्वचित्तु ।
स्पृष्ट्वा बलेनाहत एव किञ्चिद्ध्यस्तीति यद्वेत्ति स सोऽवलम्बः ॥ ७ ॥
अथान्धकारे निविडे स चक्षुर्विस्फार्य्य पश्यन्न च किञ्च पश्येत् ।
अथापि पश्यन् प्रतमां तमोऽस्तीत्येवं स पश्यत्यवलम्बनं तत् ॥ ८ ॥

६ ब्रह्मेति वालम्बनमस्ति बिम्बस्योर्म्यांश्च वारीव बलस्य सत्यम् ।
आरम्भणं तन्नु यतश्च यस्मिन्नारभ्यते तस्य बलस्य रूपम् ॥ ९ ॥

सर्वत्र संस्था हि फलप्रसूतेः सा सा, पृथग्वन्नियतास्ति लोके ।
यादृग्फलं क्वाप्यतिशायि दृष्टं तन्मन्दमन्यत्र च न क्वचित्तत् ॥ १० ॥
क्वचिद्फलं कर्तुमिवेच्छतोऽपि नोत्पद्यते यत्नवतोऽपि भूयः ।
क्वचित्तकस्मादिव तत्प्रभूतं प्रजायते तन्नियतिप्रसादात् ॥ ११ ॥
फलं स्वतन्त्रं यदि जन्मनि स्यात्सर्वत्र सर्वं फलमेकदा स्यात् ।
तस्मादवश्यं नियतिर्नियन्त्री फलस्य काचिद् ध्रियते रसः सः ॥ १२ ॥
आरम्भणं तेन वदन्ति विज्ञा फलस्य तद्ब्रह्म तदस्ति सत्यम् ।
सत्यानुरोधेन फलोदयः स्यात् सत्यं गृहीत्वा यतते फलाय ॥ १३ ॥

७ पृथक्प्रतीतेरिह नामरूपे पृथग् विभिन्नायतने मतेताम् ।
यदन्तरा तेहि यतः पृथक्त्वं ब्रह्मैतदाकाशमिदं त्रिसंस्थम् ॥ १४ ॥

८ केचित् पुनर्ब्रह्म विवर्तनं विदुः स्वप्ने हि विज्ञानगता यथाखिलाः ।
रथा रथी सारथिरश्वकाः पथस्तथा ननु ब्रह्मणि कर्म्मणां कलाः ॥ १५
ब्रह्मच कर्म्म च पूर्णं, प्रत्येकं पूर्णतास्ति पर्य्याप्ता ।
यत् पूर्णं तत् सत्यं, सत्ये द्वे तेन ते सिद्धे ॥ १६ ॥

इति पूर्णद्विसत्योपनिषन्नाम तृतीयं पर्व पूर्णम्



# अथ प्रत्ययैकसत्योपनिषत् ।

## १ ब्रह्मकर्मान्वितरूपस्य प्रत्ययत्वम् ।

प्रत्यय इति यत्संज्ञा, ब्रह्म च कर्म्म च तदेकधाभूतम् ।
विषयाकाराकारितमिन्द्रियजनितं हि तज्ज्ञानम् ॥ १ ॥
इन्द्रियजनितज्ञानं जगतीदं दृश्यते किन्तु ।
इन्द्रियमास्तां मास्तां प्रत्यय एषोऽस्ति नित्योऽर्थः ॥ २ ॥
नित्ये ज्ञाने ब्रह्मणि कर्म्माण्येतानि भान्ति विषया ये ।
उदयन्ते विलयन्ति च तद्विश्वं शाश्वतं विकुर्वाणम् ॥ ३ ॥

## २ प्रत्ययस्याहंज्ञानाकारस्यैकसत्यत्वम् ।

कृष्णत्रिसत्यं प्रवदन्ति केचित् पूर्णद्विसत्यं च वदन्ति केचित् ।
एकं तु सत्यं प्रवदामि जीवं जीवादिह प्रत्ययतोऽस्ति नान्यत् ॥ १ ॥
विचारकक्षापरपारगामिनो विज्ञानपाथोधितलावगाहिनः ।
अलौकिकं किञ्चिदवेत्य चक्षते सत्यं तदेकं मतमस्ति निश्चितम् ॥ २ ॥
स प्रत्ययः प्रत्यय एव सत्यता तत्रैवनिष्ठा हि पुरा विपश्चिताम् ।
स ईश्वरो वा स च जीव एव वा जगत् स आत्मा स च यज्ञपूरुषः ॥ ३ ॥
स जीव एवेति ममास्ति निश्चयो मत् प्रत्ययो भावयतेऽखिलं जगत् ।
स प्रत्ययः साधु विविच्य भावितो विज्ञानमाहात्म्यविशेषमर्पति ॥ ४ ॥

## ३—ईश्वरज्ञानस्याहंज्ञानपूर्वकत्वम् ।

यदाहुरेके परमेश्वरैकसत्यत्वमस्तीति तदस्त्यलीकम् ।
सिद्धे तु सत्ये मयि सत्यतां चोपजीव्यतामीश्वरसत्यतास्ति ॥ १ ॥
यदीश्वरः स्यात् प्रथमं प्रपन्नस्तदेषु बिम्बप्रतिबिम्बभावात् ।
जीवेष्वनन्यत्वमितो महेशादुदीरितं स्यादिदमुक्तरीत्या ॥ २ ॥
किन्त्वीश्वरो न प्रथमं प्रपन्नो बहिर्जगन्मूलतया तमीक्षे ।
अन्तर्जगत्तस्तु बहिर्जगत्तत् प्रोतश्चतेऽन्तर्जगदस्ति मत्तः ॥ ३ ॥
अहं तु साक्षादनुभूयमानोऽस्म्ययं प्रमाणानुगमानपेक्षः ।
सिद्धः स्वतः स्वानुभवैकगम्यो न चापलभ्यो निजबोधरूपः ॥ ४ ॥
मामेव तस्मात् प्रथमं प्रवेद्मि प्रत्यक्तमं तत् परमीश्वरं च ।
अहं हि सोऽन्तर्जगदाकरोमि ततो बहिर्विश्वमथेश्वरञ्च ॥ ५ ॥

## ४—जीवेश्वरयोरहंरूपैकत्वम् ।

अहं तु साक्षादिव यः प्रपञ्चः स एव विश्वं च महेश्वरञ्च ।
नातः पृथक् किञ्चन सिद्ध्यतीति ब्रूमोऽवधेयं ध्रुवमेकसत्यम् ॥ १ ॥

भूपृष्ठतिर्यक् समसूत्रवर्ती प्रोद्यन् रविर्दृश्यत एव मिथ्या ।
भूकेन्द्रतिर्यक्समसूत्रवर्ती निरीक्षितः सिद्ध्यति तत् प्रमाणम् ॥ २२ ॥
भूपृष्ठतले यदि दृष्टोदयं दृशा निजानन्ति तदप्रमाणम् ।
अनिन्द्रियज्ञानमपि प्रमाणं तद्वत्तु रूपं तु निरीक्षसिद्धम् ॥ २३ ॥
योऽस्यास्त रातो मथुरां कदाचित् स द्वारकायामनुनास्ति दृष्टः ।
अथाक्षजज्ञानविरोधदृष्टो भेदातिरेकात्म्यमतिविवेकात् ॥ २४ ॥
न चैव तर्कोऽपितु दर्शनकैराब्दार्थविरोधानुगमप्रसूतम् ।
तेभ्यः परं ज्ञानमनायलब्धं तत्रास्थिता स्मस्तदिह प्रमाणम् ॥ २५ ॥

## ६–दोषमूलकाप्रमाण्यखण्डनम् ।

१ दोषास्तु दृष्ट्या पुनरीक्ष्यते ऽप्यर्थेत्येवं विदुः केचन सा कथा वृथा ।
द्विधाऽपि दर्शनेऽद्य तत्र दोषजा न दोषजा केति नियम्यते कथम् ॥ १ ॥

२ केचिद्वदन्त्यक्षकुलं प्रमाणं स्वतोऽप्रमाणं परतस्तु दोषात् ।
भ्रमस्तु दोषस्य न दोषभावं प्रामाणिकं दृष्टविशेषसिद्धे ॥ २ ॥

३ यत्रान्यथा पश्यति तत्र दोषैर्योगोऽस्ति तत्रेन्द्रियमप्रमाणम् ।
निर्दोषमेवेन्द्रियमस्ति सत्यग्राहीति कोऽप्याह तदप्यसाधु ॥ ३ ॥
यत्रेन्द्रियज्ञानमदोषमिदं दोषो न तत्रेति कथं गृहीतम् ।
यतोऽस्थिरं ज्ञानमिदं प्रसूते तेन ध्रुवं दोष इहास्ति मन्ये ॥ ४ ॥
शंखस्य पीतग्रहणं सदोषं वदन्ति किन्त्वक्षि यदीदृगेव ।
स्याच्छ्रितं विश्वजनीनमादौ तदा न दोषोऽस्य भवेद् गृहीतः ॥ ५ ॥
तथैवनक्तं भ्रमयामि चक्षुर्दृश्यं यथा ये कृतमस्ति तद्वत् ।
प्रतीयते वस्तु परन्तु तादृग् वस्त्वस्ति नो वेति न निर्णयोऽस्ति ॥ ६ ॥

४ एकान्ततो नेन्द्रियमात्रजन्यज्ञानं प्रमाणं त्वमपीदमात्थ ।
अवग्रहस्त्विन्द्रियतस्ततः स्यादीहा ततश्चागम प्रमाणम् ॥ ७ ॥
सदोषनिर्दोषपरीक्षणं प्रागीहावशादिन्द्रियजे यबोधे ।
यज्जायते तेन विवेकजन्यज्ञानं प्रमाणं न तदक्षजन्यम् ॥ ८ ॥
तेनाप्रमाणान्यखिलेन्द्रियाणि प्रमाणमेकं मन एव मन्ये ।
अचाक्षुषं चाक्षुषमप्यशेषं मनः प्रतीत्यैव भवेत् प्रतीतम् ॥ ९ ॥

## ७–मनःप्रामाण्यखण्डनम् ।

१ मनः प्रमाणं न तु वा प्रमाणं मनोऽपि मिथ्या ज्ञपयत्यनल्पम् ।
एकस्य तज्ज्ञायतेऽप्ययथार्थं ततोऽन्यथा भाव्यते परस्य ॥ १० ॥

मनांसि भिन्नानि भवन्ति भिन्नवत् प्रत्याययन्तीति न तेषु सत्यता ।
एकं मनः किञ्चन सत्यमीक्षते परं मनोऽसत्यमिदं प्रपश्यति ॥ ११ ॥
विवेकतः पश्यति कश्चिदेतज्जगत् सदन्यस्त्वसदेव सर्वम् ।
साधु व्यवस्यत्यपि कर्म कश्चित् परस्तु तत्कर्म वदत्यसाधु ॥ १२ ॥
परस्परात्यन्तविरुद्धभावान्नानामतानि प्रचरन्ति लोके ।
न ज्ञायते कस्य मतं तु सत्यं मिथोऽनुमर्दादखिलं त्वसत्यम् ॥ १३ ॥
एकस्य पुंसोऽपि मनः कदाचित् साध्वीक्षतेऽसाधु पुनः कदाचित् ।
विकल्पसंकल्पकरं कथं स्यादैकान्ततः सर्वमनः प्रमाणम् ॥ १४ ॥
तस्मादिदं यच्च यथावपश्याम्येतत् तथैवास्ति ततोऽन्यथा वा ।
शक्यं न निर्धारयितुं तदेकं सर्वं हि सन्दिग्धमिदं वदामि ॥ १५ ॥

## ८—आत्मप्रामाण्यखण्डनम् ।

१ परे पुनः प्राहुरिहास्तु नूनं सर्वं तु सन्दिग्धमिदं तथापि ।
सर्वं हि सन्दिग्धमितीदृशं यज्ज्ञानास्यसन्दिग्धमिदं त्वयास्ति ॥ १६ ॥
अत्रोच्यते निश्चितमित्यहं यत् मवैमि तद्वत् त्वमपि प्रवेत्सि ।
परे च तद्वत् प्रवदन्ति तेषां वेत्ता क एकः क इहाऽस्य वेद्याः ॥ १७ ॥
प्रवैमि तस्मादहमस्म्यथो वाहमस्मि तस्मादखिलं प्रवैमि ।
शक्यं न निर्धारयितुं ततोऽस्ति ज्ञेयं न न ज्ञानमहं च नास्मि ॥ १८ ॥
अथापि वा प्रत्यय एव एको वेत्ता च वेद्यानि च वित्तयोऽपि ।
तस्यैव रूपं न ततोऽस्ति भिन्नं सर्वं जगत् प्रत्ययमेव मन्ये ॥ १९ ॥
अथापि वा सन्ति पृथग् विधानि वेत्ता च वेद्यानि च वित्तयोऽपि ।
वेद्यानि वा सन्ति यथा स्वरूपाण्यतोऽन्यथा भान्ति तु वित्तियोगात् ॥ २० ॥
वित्तिर्न मे निर्विषयाऽयमाति, सा भाति नित्यं विषयात्मनैव ।
अर्थः स्वरूपाच्च्यवतेऽस्य धीश्च द्वियोगजं रूपमपूर्वमेतत् ॥ २१ ॥
द्रष्टुं न शक्यं यदिहास्ति सत्यं यद् दृश्यते तत्क्षणिकं न सत्यम् ।
परः सहस्रैरपि नात्र याथातथ्यं प्रयत्नैरुपगन्तुमर्हम् ॥ २२ ॥

## ९—सत्यज्ञानाशक्यत्वापादनम् ।

१ सर्वं प्रमाणं मनमप्रमाणं न हि प्रमाणाय परं प्रमाणम् ।
यदप्रमाणं न तदस्ति सत्यं तस्मादमन्यादृि न सत्यसिद्धिः ॥ २३ ॥
सत्यग्रहायास्ति न कोऽप्युपायो नोपेयसिद्धिस्तु विनास्त्युपायात् ।
तस्मादशक्यार्थपरीक्षणार्थो यत्नो वृथास्ति क्रियतां विरामः ॥ २४ ॥

## १०—जीवखण्डनम् ।

१ जीवोऽयमात्मा न शरीरभिन्नोऽस्त्यमूर्तमूर्तव्यतिरिक्तरूपः ।
सूक्ष्मं शरीरस्य यदस्ति रूपं स्थूलं यतोऽजायत सोऽस्ति जीवः ॥ २५ ॥
शरीरवद् ध्रियमाणरूपः सार्धं शरीरेण स जायते च ।
नश्यत्यनेनैव सहैव मृत्वा लोकान्तरेऽगादिति तु भ्रमोऽस्ति ॥ २६ ॥

## ११—ईश्वरखण्डनम् ।

१ आपामरादाविदुषां कुलाद्या नाद्यापि यत्नैरपि योऽस्ति दृष्टः ।
मिथ्येश्वरं तं परिकल्प्य मूर्खाः कुर्वन्ति कर्माणि वृथा तदर्थम् ॥ २७ ॥
स सच्चिदानन्द इहेश्वरोऽस्तीत्याहुः परे तन्मतमस्ति मिथ्या ।
न चाप्यदानन्दमयस्तथा स यत्काम इत्येव जगत् कुर्यात् ॥ २८ ॥
यत्त्वब्रुवन् लोकवदस्य लीला कैवल्यमित्यस्ति विडम्बनैषा ।
प्रतारणा वा न स ईश्वरोऽसौ संभाव्यते प्राकृतजीवसाम्यात् ॥ २९ ॥
लोके च लीला द्विविधा विनोदहेतुः पयस्ताडनवद् वृथा वा ।
व्यनक्ति तु प्रागिह दौर्मनस्यं, धैर्यत्वनिस्तारविधिर्विनोदः ॥ ३० ॥
यद्वा जगत्कर्तुरमुष्य तस्मात्प्रागाद्विधानान्मनसः प्रसादः ।
सुखोदयो च प्रथमस्य तर्हि प्रतीयते प्रागिह तु स्वयोगः ॥ ३१ ॥
अथो कृपाकर्म तु पापमस्तीश्वरो वृथा तत्र कदापि कुर्यात् ।
एतद्द्वयं तु व्यतिरिच्य लोके लीला न काचित् तदयं मृषार्थः ॥ ३२ ॥
विज्ञानरूपः परमेश्वरोऽसावित्याहुरन्ये तदसत् प्रतीमः ।
विज्ञानमेवेश्वर इष्यते वा विज्ञानवानीश्वर इष्यते वा ॥ ३३ ॥
ज्ञानं यदीशः स जडस्तदानीमापद्यते ज्ञानमिदं क्व तिष्ठेत् ।
विज्ञानवानीश्वर इष्यते चेद्विज्ञानभिन्नोऽस्त्यपि कश्चिदर्थः ॥ ३४ ॥
प्रमाणतो ज्ञानमुदेति सर्वं तज्ज्ञानमासीदिति किं प्रमाणम् ।
ज्ञानं कश्चिन्निर्विषयं न दृष्टं प्राक् सृष्टितः को विषयोऽस्य योग्यः ॥ ३५ ॥
शब्दप्रमाणज्ञानगतं त्रिमातुस्तत्कर्मणा दृश्यत इत्यलीकम् ।
यतोऽनित्यं ज्ञानमतः कथं वा ज्ञानादिमे स्युर्विषया प्रदृष्टाः ॥ ३६ ॥
स ईश्वरो नित्य उतैष जन्मवान् स जायते चेज्जगदेव नेश्वरः ।
यतोऽन्यतोऽसावुदितः स ईश्वरोऽथानीश्वरो नित्य उतास्त्यनित्यवत् ॥ ३७ ॥
आकस्मिकश्चेज्जगदप्यकस्मात् संभाव्यते व्यर्थ इहेश्वरोऽयम् ।
अनित्यतायां पुनरेवमेवाशङ्का प्रवर्तेत ततोऽनवस्था ॥ ३८ ॥
नित्योऽस्ति चेन्नित्य जगत् सृजत्ययं यद्वा कदाचित् सृजतीत्यपूर्ववत् ।
नित्यस्य कामः प्रतिशक्तिरोहितं नित्यान्यनित्यान्यथवा मनुष्यवत् ॥ ३९ ॥
नित्या यदि ज्ञानविधानकामना नित्यं तदेदं तु जगत् प्रसज्यते ।
न प्रागभावो जगतस्तदास्य सा व्याहन्यते सृष्टिविधौ विधातृता ॥ ४० ॥

अथो कदाचित् सृजतीति मन्यसे तत् प्रागभावं च कदापि पश्यसि ।
किन्तु प्रमाणं हि न तत्र दृश्यते तत् कल्पनामात्रमसारमुच्यते ॥ ४१ ॥
अनित्यकामस्य तु कामना क्वचित् प्रजायते सृष्टिकृते मतं यदि ।
उद्देश्यमेतस्य किमस्ति सृष्टये कस्मादकामस्य स काम उद्गतः ॥ ४२ ॥
मनोविनोदार्थमिदं तदा पुरा संभाव्यते ग्लानिरमुष्य मानसे ।
सृष्ट्युत्तरं प्रीतिरिहास्ति तस्य चेदग्रेऽस्य आनन्द इति प्रसज्यते ॥ ४३ ॥
निरर्थकं चेत् कुरुते तदाव्यवसायकर्मकृत् पागलवदेव संभवेत् ।
अनिच्छतस्तस्य जगत् स्वतो यदि प्रवर्तते तर्हि वृथैव स स्मृतः ॥ ४४ ॥
निर्माणकर्ता नु स सृष्टिकर्ता स्रष्टा स चेत्तर्हि भवेद्विकारी ।
निर्मापको ह्यन्यगुणाद्यपेक्षी प्रसज्जते तत् परतन्त्र एषः ॥ ४५ ॥
स किंशरीरः किमुपाय एव वा कुत्र स्थितः कुत्र कदा विनिर्ममे ।
किमस्त्युपादानमथास्य चेष्टितं किं सृष्टितः प्रागुपपद्यते न तत् ॥ ४६ ॥
स व्यापकः स्वीक्रियते मितो वा मितस्तु विश्वेन समोऽस्त्यनीशः ।
स व्यापकश्चेत् जगदेतदास्ते कुत्रावकाशोऽनवकाशतायाम् ॥ ४७ ॥
तदित्थमत्राऽनुपपत्तयः स्युर्बह्वोऽपि नित्येश्वरकल्पनायाम् ।
स्वीकुर्वतो वाऽनुपपन्नमथ कथा वितण्डा परिहार्यशून्या ॥ ४८ ॥
तस्माद् वृथैवेश्वरकल्पनेयं मन्यामहे शाश्वतिकं जगत् तत् ।
अपास्तनानेकविकल्पकल्पतं स्वभावतः शाश्वदिदं स्वतोऽस्ति ॥ ४९ ॥
सत्ता तु येऽयं जगतः स ईश्वरस्तत् सत्तया सज्जगदस्ति न स्वतः ।
इत्थं विदुः केचन सा विडम्बना स्वप्नस्तथा सत्र कुतस्तदिष्यते ॥ ५० ॥

## १२—उपास्यदेवताखण्डनम्

१ स्वीकुर्वते केचिदनेकदेवान् विलक्षणान् निग्रहिणोऽप्यदृश्यान् ।
स्त्रीपुत्रमित्रादिसमाजवन्तं पापं च पुण्यं च वदन्ति तेषाम् ॥ ५१ ॥
अथापि तानीश्वरवद् युपासते तान् मन्वते स्वाभिमतार्थसाधकान् ।
न सन्ति ते निग्रहिणोऽप्यतस्ततः प्रमाणशून्यास्तदुपासना मृषा ॥ ५२ ॥

## १३—सर्वसिद्धान्तखण्डनम् ।

१ विज्ञाननिर्मन्थनजातरूपं सिद्धान्तमाहोपनिषत्पदेन ।
अधर्म्यधर्मादिककर्ममार्गे स्थिरयस्थितौ सोऽनियत् प्रयुङ्क्ते ॥ ५३ ॥
किन्त्वस्ति सन्दिग्धमिदं समस्तं नैकोऽपि सिद्धान्त इहोपपन्नः ।
तस्माद् यथेच्छाचरणं विरक्तां मिथ्यायमाचारविचारबन्धः ॥ ५४ ॥
यदेव यत्रैव यथैव भासते तदेव तत्रैव तथैव मन्यताम् ।
यद्रोचते ते न भयं च यत्र ते तत्कर्म कुर्याः सुखमास्स्व मा शुचः ॥ ५५ ॥

# १४—असमाधेयप्रश्नावली।

१ सहस्रशो लक्षश एव कोटिशः शङ्काः भवन्ति ह्यर्थतोऽर्थतः ।
विज्ञानशालासु न तत्समाधये वैज्ञानिकाः केऽपि कदापि वा क्षमाः ॥ ५६ ॥
उद्यन्ति दन्ता नहि जन्मकाले क्षरन्ति भूत्वा पुनरुद्भवन्ति ।
विशीर्यमाणा न पुनर्भवन्ति प्रायेण विज्ञानमिदं कथं स्यात् ॥ ५७ ॥
अग्रेऽधरा एव भवन्ति दन्ता अथोत्तरा अप्यधरेऽनुभूता ।
दन्ताः प्रथीयांस इयोत्तरे स्युर्दंष्ट्राः प्रवृद्धा नु समा नु जग्म्याः ॥ ५८ ॥
प्रजाः प्रजायन्त इमा हि लोमशाः किन्नूपपश्यानि भवन्ति चोत्तरम् ।
श्मश्रूणि दुर्योषिणकानि वा नृणां स्त्रीणां तु न श्मश्रु समुद्भवः कुतः ॥ ५९ ॥
शीर्षे च श्माश्र पलितो भवत्ययं सोऽन्यैव सर्वं पलितो वयस्यपि ।
मध्ये वयस्येव निपिचमुद्भवेद्धेत शिरोजो स्थविरस्य वा किम् ॥ ६० ॥
स्वैदायनः शौनक एवमेवं पप्रच्छ तूद्दालकमारुणिं प्राक् ।
ब्रह्मापृयं कुण्ठित एव तस्यां मत्युत्तरे न क्षमते स्म तेषाम् ॥ ६१ ॥
( शत० ११।२।७ )
प्रवर्द्धमानोपि नरः कुतोऽस्मादेशतो नोर्ध्वमुपैति वृद्धिम् ।
कुतः शिरोजाः पुरतोऽयतक्ताः कृष्णाः सितास्तत्परतस्तु पीताः ॥ ६२ ॥
प्राणद्वयं वृक्षगतं मनुष्ये प्राणत्रयं वृक्षनिधाश्च तस्मिन् ।
वृक्णा द्रुमा पल्लविता पुनः स्युर्वृक्णो नरो जीवति नेति कस्मात् ॥ ६३ ॥

'यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।
तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥ ६४ ॥
१ च एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।
तस्मात्तदा तृण्णात् प्रति रसो वृक्षादिवाहतात् ॥ ६ ॥
मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम् ।
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमाकृता ॥ ६६ ॥
यद् वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥ ६७ ॥
रेतस इति मा वोचत जीवतस्तत् प्रजायते ।
जात एव न जायते को न्वेनं जनयेत् पुनः ॥ ६८ ॥
धाना रुह इवै वृक्षोऽञ्जसा प्रेत्यसंभवः ।
यत्समूलमुद्वृहेयुर्वृक्षं न पुनराभवेत् ॥ ७० ॥
यत् पत्रमूले यदरुद् भवत्य द्वे कण्टके वर्द्धयतः सहैव ।
यत्कं तदेकमथैकमन्यत् त्वगग्रमीक्षे तदिदं कुतोऽभूत् ॥ ७० ॥
या वर्तमाना अपि या भविष्या याश्चाप्यतीता जनता अनन्ताः ।
तदाकृतौ तद्वचने च भूयः साम्येऽपि किं भेदकमित्यचिन्त्यम् ॥ ७० ॥
उच्छ्वासनिश्वासविधी शरीरे प्रतिक्षणं यौ भवतो निसर्गात् ।
भूयः परीक्ष्यापि तयोर्यथावद् विदन्ति हेतुं न मनीषिणोऽपि ॥ ७१ ॥
कुतो दिवा ग्राह्य कुतो निशान्या अहर्निशं तुल्यदशाः कुतः स्युः ।
शृण्वन्ति कस्माच्च दृशैव केचिच्छिक्का सुषुप्तस्य कुतो न दृष्टा ॥ ७२ ॥

ऐन्द्रं धनुर्बुद्बुदमर्धवृत्तं वीक्षे न कस्मात्परिवर्तुलं तत् ।
पार्श्वाहतामत्रजलस्य वीचो संतिष्ठते नाभिमिहेत्यकस्मात् ॥ ७३ ॥
कुतो न वीक्षे हसितं खगानां कथं शिला शोणितवृष्टिरूर्ध्वात् ।
कुतो रवीन्द्वोः परिवेष एवं समस्तपृथ्व्यां न कुतः स दृश्यः ॥ ७४ ॥
काचे दृढेऽप्यप्रतिरुद्धरश्मिर्निरुध्यते क्षुद्रतिलेन कस्मात् ।
लौहे कठोरेऽप्यनिरुद्धतापोऽङ्गारेऽल्पखण्डे पि निरुद्धयते किम् ॥ ७५ ॥
दृढोऽपि लौहो मृदि शीर्य्यतेऽथाङ्गारः समास्तिष्ठति शाश्वतीः किम् ।
विनैव पक्षं पशवोपि केचिद्भ्रमन्ति खेऽन्ये तु न पक्षिणोऽपि ॥ ७६ ॥
सर्वं तदित्थं व्यभिचारि कश्चिन्न शक्यतेऽस्मिन्नियमः प्रवक्तुम् ।
सूर्य्यं जिघृक्षेदपि पाणिना यज्जिज्ञासते तद्वदिदं समस्तम् ॥ ७७ ॥

(१) आश्चर्यवत् पश्यति कश्चिदेन माश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैन मन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ७८ ॥
अचरज भरी आंखों से देखता है इसे कोई,
अचरज के तौर पर कहता है इसे कोई ॥
अचरज के भावों से सुनता है इसे कोई,
पारयार सुन कर भी न जानता है इसे कोई ॥

(२) " अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्याया रताः " ॥ ७९ ॥
गहरे अँधेरे मे घुसते हैं वो, अनजान ये समझ अरु बेखबर हैं जो ।
उससे भी ज्यादा अँधेरे में वो, सब सही जानने को मुस्तैद हैं जो ॥

## १५—अज्ञानश्रेयस्त्वसूत्रम् ।

वृथा च विज्ञानरते परिश्रमो न ज्ञानतः श्रेय इहोपलभ्यते ।
विरुद्धभावाश्रवणे विवादिता चित्ते च कालुष्यमतीव जायते ॥ ८० ॥
ये ज्ञानिनस्ते सततं बुभुत्सया व्यग्रा भवन्तोऽपि न चेत्समीहते ।
अनेयमर्थं तत आकुलेन्द्रियाः करस्थमन्नं च न हन्त भुञ्जते ॥ ८१ ॥
अज्ञानिनां किन्तु न चास्त्यहंकृतिर्न चित्तकालुष्यमतो न चिन्तनम् ।
सुखेन निद्रान्ति, सुखेन जाग्रति, प्रायः सुखं जीवनमस्ति तादृशाम् ॥ ८२ ॥
अज्ञानिकाः केचन सात्यमुग्रि—शाकल्य—वत्सादय एवमूचु. ।
दुरूहदृष्टिक्रमहेतुचिन्तां विमुच्य मेयां हि मतेऽस्ति पथ्यम् ॥ ८३ ॥

इति सन्दिग्धसर्वोपनिषत् ॥ ४ ॥ प्रथमं पर्व ॥ १ ॥

—:०:—

# अथ--असत्योपनिषत् ।

## १--परस्पर प्रत्ययमर्दात् सर्वमतानामप्रामाण्यम् ।

१ विमर्शयन्तो जगतोऽस्य मूलं प्राज्ञा अगृह्णन् मतमन्यदन्यत् ।
एके त्रिसत्यं तु, परे द्विसत्यं, यदन्ति चान्ये यदुर्धकसत्यम् ॥ १ ॥
इत्थं विदां संशयतः परस्पराघाताश्च सर्वाणि मतानि दुद्रुवुः ।
नास्ति प्रमाणं यदि तर्हि निश्चितं नास्त्येव किञ्चित् त्विति मन्महे वयम् ॥ २ ॥
यस्तोयमस्तीत्यविदत् प्रमाणतः स हि प्रमाणं यदि नेक्षते तदा ।
न तोयमस्तीत्यवधारयेत्, स्वतोऽसत्ता हि, सत्ता तु भवेत् प्रमाणतः ॥ ३ ॥
सामान्यतः सर्वविधप्रमाणाभावोऽस्ति चेत् संशय एव नास्ति ।
सामान्यतः सर्वमिदं स्वतोऽसत् सिद्ध्येत्,प्रमाणेन तु सद् धियेत ॥ ४ ॥
तस्मात् प्रमाणव्यतिरेकतः सतो यथा तथा स्यादसतोऽप्यधारणम् ।
इत्थं कुतर्कावसरो न विद्यते, स्याद्वा तथापि त्वसदेव सिद्ध्यति ॥ ५ ॥
सन्नास्ति चेत् सर्वमसत् प्रतीयतां स प्रत्ययस्त्वस्ति स नापलप्यते ।
इत्थं कुतर्कोऽपि न युज्यते यतः स्वभ्रान्तिकज्ञानवदस्य भ्रान्तत्वात् ॥ ६ ॥
यथाग्निरत्यन्तविरुद्धसान्द्रसत्त्वाण दहन् तेन सहैव शाम्यति ।
तथा ह्यसत्प्रत्यय एव सर्वसद् व्यपोह्य तेनैति सह व्यपोहनम् ॥ ७ ॥

## २-शास्त्राणां मतभेदादात्मस्वरूपे सिद्धान्ताप्रतिपत्तिः ।

वैशेषिकाणां द्विविधोऽयमात्मा प्राधानिका आहुरनेकधात्मा ।
शारीरकाणामयमेक आत्मा सर्वेऽप्यमी संशयिनः स्म सन्ति ॥ १ ॥
जीवेश्वरौ पश्यति तौ कणादः, मन्येति जीवान् कपिलो न चेशम् ।
द्वैपायनो मन्यत ईशमेकं, नैकस्य कस्यापि स निश्चितोऽर्थः ॥ २ ॥
वेदान्तवाक्येष्वपि कश्चिदर्थो न निश्चितो लभ्यत एकमत्यात् ।
प्रज्ञानमात्माऽथ महानिहात्मा विज्ञानमात्मा क्वचिदव्ययात्मा ॥ ३ ॥
आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ४ ॥ [ गीता ]

## ३--आत्मज्ञानाशक्यत्वे वेदर्षिसहानुभूतिः ।

वेदर्षिरप्याह यथाऽयमात्मा न शक्यते ज्ञातुमपि प्रयत्नात् ।
यदा ममान्तर्हृदि वाग्उपागाद् आत्मानमेतां प्रवदामि वाचम् ॥ १ ॥

## ४--तथा चाह भगवान् दीर्घतमा महर्षिः ।

"न विजानामि यदि वेदमस्मि निण्यः सन्नद्धो मनसा चरामि ।
यदा मागन् प्रथमजा ऋतस्य आदिद् वाचो अश्नुवे भागमस्याः ॥ ३ ॥ [ १ । १६४ । ३७ ।]

## ५—असङ्गत्व-ससङ्गत्वयोरात्मस्वरूपानुपपत्तिः ।

३ असङ्ग आत्मास्ति, ससङ्ग एव वा, ससङ्गतायां तनुवच्च्यवेत सः ।
न कर्मजन्योऽतिशयस्तु संभवेदसङ्गतायां गतिभुक्तिमुक्तिदः ॥ १ ॥

## ६—प्रेत्यावस्थान-लोकान्तर गमन-जन्मधारणेषु मतभेदादेक सिद्धान्ताप्रतिपत्तिः ।

लोकान्तरं याति स कस्यचिन्मते स्वकर्म भोक्तुं नरकेऽथवा दिवि ।
देहं त्यजन् पौथिकमेष तत्क्षणाद् गृह्णाति देहं तु परं मतान्तरे ॥ १ ॥
लोकान्तरे नैति स कस्य चिन्मते, न जन्म गृह्णाति पुनः स कर्हिचित् ।
गान्धर्व देहः स इहैव तिष्ठति प्रेतः सुखं दुःखमुपैति वा क्वचित् ॥ २ ॥
मतान्तरे कर्हिचिदस्य कर्मणो विचारणां विश्वपति करिष्यति ।
अनुग्रहं निग्रहमस्य तर्हि यं विधास्यतीत्येवमनेकधा मतम् ॥ ३ ॥
एतेषु सर्वेषु मतेषु युक्तिमत्क्व सेषु कुत्रापि परीक्षणं नहि ।
शक्यं विधातुं, न च तत्र कुत्रचित् प्रमाणमस्तीतिवृथा विडम्बना ॥ ४ ॥

## ७- प्रेत्यभावान्तरानवगमादनिर्णयः ।

मृतः क्षणादेव तु जायतेऽथवा मृतः स कालेन पुनर्विजायते ।
तत्प्रेत्यभावे क्षणमेकमन्तरं सहस्रवर्षाण्यथवेति वेत्ति कः ॥ १ ॥

## ८—योनिपरिवर्तनानवगमादनिर्णयः ।

श्वाश्वः शुकत्वे, स शुको नृविग्रहे, नरः करित्वे, परिवर्तते न वा ।
इत्यस्ति संदेहपदं, न तस्यचित् कश्चिद्विपश्चित्कुरुते विनिश्चयम् ॥ १ ॥

## ९—सर्वत्र संशयनिस्ताराशक्यत्वम् ।

न सोस्ति नाभून्न भविष्यतीदृशो मृतो य आगत्य वदेत् परिस्थितिम् ।
पारत्रिकी, यस्य वचः प्रमाणत. स संपरायोऽत्र भवेद्विनिश्चितः ॥ १ ॥
विभीषिका मात्रमिदं यदुच्यते प्रेत्यांहसा दुःखशतानि भुञ्जते ।
पृथक् पृथिव्या न हि लोक इष्यते न स्वर्गलोको नरको न विद्यते ॥ २ ॥
एकान्त दुःखं नरके न सौख्यं स्वर्गः सुखायैव न तत्र दुःखम् ।
सुखं च दुःखं च मनुष्य लोके—तद् विप्रलम्भाय वचोऽप्रमाणम् ॥ ३ ॥
कियद्वदामोऽलमलं परिश्रमैः परोक्षभावस्य विचारवर्त्मनि ।
सहस्रवर्षैर्बहुदेहपातनैरसंशयं ज्ञातुमिदं न शक्यते ॥ ४ ॥

## १०—प्रेत्यात्मसत्ताया नितान्तमिथ्यात्वम् ।

प्रेत्यायमात्मास्ति न चेति संशयः प्रवर्तते नैव कदापि शाम्यति ।
प्रत्यक्षमीक्षे वपुषोऽवसादनं यदीन्द्रियाणां मनसोऽस्य चात्मनः ॥ १ ॥
जिह्वां विना नो रसना, न नासिकां घ्राणो, न नेत्रेण विनाक्षि तिष्ठति ।
श्रोत्रं न कर्णेन, न चर्म्मणा त्वचा, मनो हृदाऽऽत्मा च विना न वर्ष्मणा ॥ २ ॥
जीवद्दशायां न कदापि दृश्यते विना शरीरं पृथगात्मनः स्थितिः ।
कथं प्रतीयां वपुषोऽवसादने स एष आत्मास्ति परत्र संचरन् ॥ ३ ॥
मृतः स आत्मा यदि वर्ष्मणा विना लोकान्तरे पार्यतेऽभिधावितुम् ।
कुतः स न स्वं परिवारमागतोऽभिशंकि, दत्तं न भुनक्ति वा कुतः ॥ ४ ॥

## ११—रथात्मवत् शरीरात्मनाशात् प्रेत्य संज्ञाभावः ।

रथो यथा चक्रधुरादिदारुभिः शक्तिप्रबुद्धा लभते विधारिणीम् ।
तथा शरीरं रुधिरादिधातुभिःशक्तिप्रबुद्धामुपयाति चेतनाम् ॥ १ ॥
भूतेभ्य एभ्योऽधि समुत्थिताऽथ सा विधारिणी शक्तिरपैति तान्यनु ।
रथस्य भङ्गे तु न तस्य भिन्नवत् कश्चित् स आत्मा ध्रियमेति युज्यते ॥ २ ॥
तथैव मर्त्ये वपुषोऽवसादने सा चेतना शक्तिरिहैव नश्यति ।
तान्येव भूतान्यनु न स्थितः पृथक् कश्चित् स आत्मा ध्रियमेति युज्यते ॥ ३ ॥
ब्रवीति विद्वानपि याज्ञवल्क्य, आरण्यके निश्चितमेतमर्थम् ।
न प्रेत्य संज्ञास्ति न चायमात्मा लोकान्तरं याति शरीरनाशे ॥ ४ ॥

## १२—मरणोत्तरमात्मनोऽसत्त्वे वेदर्षिसहानुभूतिः ।

( १ ) "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति । नेति होवाच याज्ञवल्क्य । अत्रैव समवनीयन्ते । स उच्छ्वयति । आध्मायति मृत शेते ॥" ( शत १४ । ६ । २
( २ ) "यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवमयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य
( ३ ) संज्ञास्ति ॥ + ॥ "यथा सैन्धव खिल्य उदके प्रास्त उदकमेवानु विलीयेत, न हास्योद्ग्रहणायेव स्याद् यतो यतस्त्वाददीत लवणमेव एवमिदं महद् भूत मनन्तमपारं विज्ञान घन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति [ शत० १४ । ५४ ] [ १४ । १० । १ ]

## १३—आत्मनः प्रेत्य सत्ताभावसिद्धान्तः ।

स्वार्थान्धताद्वेषवशादिमे जना यथेच्छमन्यान्यमतान्यकल्पयन् ।
न वस्तुतः प्रेत्य कदा चिदात्मनः स्थितिः क्व चाप्यस्ति, ततो विरम्यते ॥ १ ॥

### इति सर्वासत्योपनिषत् । द्वितीयं पर्व ॥ २ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे
संशयोच्छेदवादे संशयाधिकारो नाम
द्विपर्वा मध्यमकाण्डः समाप्तः ॥ २ ॥

# अथ संशयोच्छेदाधिकारो नामोत्तमः काण्डः प्रारभ्यते ।

## तत्रेदं विशिष्टाद्वैतविज्ञानं नाम त्रिशिष्टत्रिसत्योपनिषत्

## प्रथमं पर्व ।

सर्वासत्यवादप्रतिवादः प्रथमखण्डः ॥ १ ॥

### १—आलोचक-परामर्शे संशयाभ्युपगमप्रतिवादः ।

एके त्रिसत्यं च, परे द्विसत्यं, तथैकसत्यं च यदन्यसत्यम् ।
नाना मतानि प्रसमीक्ष्य केचित् संशय पश्यन्ति न तेषु सत्यम् ॥ १ ॥
न संशयं प्राप्य मनोहतः स्याद् ध्रुवं परीक्ष्ये पथि संशयः स्यात् ।
संशय्य निर्णेतुमुपैतु यत्नं प्रयत्नतोऽन्विष्य लभेत रत्नम् ॥ २ ॥
नाशेषमानप्रतिपत्तिहेतोरेकान्ततोऽपेक्ष्यमिदं प्रमाणम् ।
सहस्रशः सन्ति जगत्पदार्था अतीन्द्रिया येषु न धीप्रवेशः ॥ ३ ॥
यावद् विजानात्यपि यत्र युक्तिर्यत्र प्रमाणं प्रतिभाति तावत् ।
स्वीकार्यमन्यत् त्विह नाभ्युपेयादिति प्रवृत्तिः खलु बालिशानाम् ॥ ४ ॥

### २—सर्वासत्याभ्युपगमप्रतिवादः ।

साधारणा दुर्बलबुद्धयो मुहुर्विरुद्धभाषाश्रवणेन विह्वलाः ।
मनोहता गूढविचारनिःस्वास्त्वेकान्ततः सर्वमसत्यमूचिरे ॥ १ ॥
न त्वस्य कर्तव्यमिहास्ति किञ्चित् ज्ञातव्यमप्यस्य न किञ्चिदस्ति ।
नादेयमेतस्य न हेयमीक्षे तस्मादुपेक्ष्ये तमसत्यवादम् ॥ २ ॥

### ३—त्रिसत्योपासनायाः कर्मयोगसापेक्षतयाऽव्यवस्थितत्वात् संशयाजनकत्वम् ।

नात्यन्तमूढा न च दीर्घदर्शिनो ये मध्यकक्षाव्यवहारपण्डिताः ।
तावत् त्रिसत्ये कृतबुद्धयः स्वतो भिन्नं महेशानमुपासते हि ते ॥ १ ॥
प्रवृत्तिमार्गे व्यवहारनिष्ठैरुपासनीयः परमेश्वरोऽसौ ।
स्वनिर्मितं यत्त्रिदोषमग्नं निवेद्य नैवेद्यमलं स इज्यः ॥ २ ॥
यज्ञेन तेनैव महीयमानस्तेषां प्रसीदेत् परमेश्वरोऽयम् ।
जीवा मयक्ताः परमेश्वरस्था, जीवेषु तेषामीश्वरदानिद्राः स्युः ॥ ३ ॥

भुङ्क्ते हि जीवोऽखमयं स यथो देहे भेदीश्वरतन्त्रभुत्
स ईश्वरस्तत्र तथा करोति यथाश्रुते यत्फलं स जीव ॥ ४ ॥
ग्रन्थं प्रचार्येह सदर्थबोधं राष्ट्रं प्रतिष्ठाप्य विशिष्टसंस्थाम्।
शिल्पं विनिर्माय महोपकारायनेन तेनेशमसावुपास्ते ॥ ५ ॥
अनेन चानेन च कर्मणास्मिन् जगत्यपूर्वं युगमारभन्ते।
तेनेश्वरो विश्वगुरुर्नवीनं संस्कारमासाद्य महीयते हि ॥ ६ ॥
अनेन चानेन च कर्मजातेनामुष्य जीवस्य धिया स आत्मा।
स्वार्थान्वितात्कल्मषदूरहानादुदारतामेति जगत्प्रतिष्ठ ॥ ७ ॥

## ४—एकसत्योपासनाया ज्ञानयोगसापेक्षतया व्यवस्थितत्वात् संशयाजनकत्वम्।

निधाय शुद्धां धियमित्थमत्र तदुपासना धर्मदशाचतुष्टयम्।
विज्ञानमार्गं प्रविशेदलौकिके नानाधिकारो व्यवहारमार्गिणाम् ॥ १ ॥
यदुच्यते सा व्यवहारमार्गे जीवेश्वरान्योन्यविभेदबुद्धि।
मिथ्यास्ति तस्मात्तदुपास्ति धर्माचरणो न संभाव्यत इत्यसत्तत् ॥ २ ॥
मृत्तुम्भयो कारणकार्ययोर्यथा तादात्म्यमीक्षे परमार्थदृष्टित।
तथापि लोकेऽस्ति हि भेदवासना नात्यन्तमज्ञानमिदं न पातकम् ॥ ३ ॥
स्याद्वाद विज्ञानविचारमार्गिणामिदं मत सर्वविधं यथार्थवत्।
बुद्धिश्चरन्ती पथि यत् कचित् कचिद्विश्राम्यतीमानि मतानि तद्वशात् ॥ ४ ॥
सूक्ष्मादियं स्वं दृशियाय पीठता पीवेदयते पीव्नि हि याति दृढ्रूप।
सूक्ष्मातिसूक्ष्मं व्यवगाहते क्रमात् श्रम स पवेह मतक्रमोऽभवत् ॥ ५ ॥
सूक्ष्मात् क्रमात् स्थूलमभूदिदं जगत् स्थूलात् क्रमात्सूक्ष्मतमं तु मृग्यते।
परीक्ष्यते कारणमस्य मौलिकं तत्राग्रतस्तानि मतानि सत्यवत् ॥ ६ ॥
विचारकक्षापरपारगामिनो विज्ञानपाथोधितलावगाहिन।
अलौकिकं किञ्चिदवेत्य चक्षते सत्य तदेकं मतमस्ति निश्चितम् ॥ ७ ॥

## ५—शास्त्रत्रयमतभेदोत्पन्नसंशयस्य निरासः।

विशेषशास्त्रे च प्रधानशास्त्रे शारीरशास्त्रे च मतप्रभेद।
आक्षिप्यते संशयहनुभूतो यस्तत्र चेदं प्रवदामि किञ्चित् ॥ १ ॥
(१) निरीक्ष्य भूतान्यगुणं कणादको महान्तमात्मानमपोह पश्यति।
विशेषतो लक्ष्यमिहाधिभूतक गौणी प्रवृत्तिस्तु ततोऽन्यवर्त्मनि ॥ २ ॥
(२) महान्तमात्मानमलं निरूपयन् क्षेत्रज्ञमन्य कपिलोऽनुपश्यति।
प्रधानतोलक्ष्यमिहाधिदैवतं चाध्यात्ममप्यस्त्यविशेषतो गति ॥ ३ ॥
(३) क्षेत्रज्ञमात्मानमलं निरूपयन् कृष्णद्विदात्मानमपीक्षते बहु।
अध्यात्मरूपेण सहाधिदैवतं सहाधिभूतं च समीक्षतेतराम् ॥ ४ ॥

चत्वार आत्मान इमेऽनु संहिता क्रमान्निरुक्ता न तु तत्र संशय ।
अनुग्रहोऽयं यदिदं पृथक् क्रमान्निरूप्यते, न क्रियते तु संकर ॥ ५ ॥
शास्त्रं तदेकं त्रिभिरेभिरिष्यते तस्मिंश्चतुर्णां प्रतिपत्तिरात्मनाम् ।
विभिन्ननिर्म्मातृवशात् त्रिमे महाखण्डा पृथक् शास्त्रतयाऽनुकल्पिता ॥ ६ ॥

# ६ आत्मगतौ मतभेदात् संभवतः संशयस्य निरासः ।

## १—असङ्गत्व—ससङ्गत्वयोरात्मभेदेन व्यवस्था ।

असङ्गतायां च ससङ्गतायां य संशयस्तन्निकृतिं वदाम ।
अनेकधाऽऽत्मान इहोपदिष्टा केचित् ससङ्गा कतिचित् त्वसङ्गा ॥ १ ॥
स निर्विशेष , स परात्परो वा, स चाव्यय सोऽक्षर, इत्यसङ्गा ।
क्षरस्तु कर्म्मामतया स सङ्गो भूता मन कर्म्मगतिं वदन्ति ॥ २ ॥
* प्रज्ञानसङ्गोऽस्ति ससङ्ग आत्मा कर्म्मामता भौतिकता च तत्र ।
नो चेत् कथं तत्र स कर्म्मजन्य संस्कार उत्पद्य चिरं ध्रियेत ॥ ३ ॥
मुखेऽम्लयोगाद्रसि नस्ययोगात् कर्पूरयोगाद् दृशिवा यथाऽऽप ।
निर्य्यान्ति, दुःखानहताश्च हृत्स्थात् प्रज्ञानतोऽश्रूणि तथा द्रवन्ति ॥ ४ ॥
शृङ्गारे बीभत्से वीरेकरुणेऽद्भुते हास्ये ।
रौद्रे भये च शान्तौ द्रवतीन्द्रियगो रसा मना प्राज्ञ ॥ ५ ॥
यो भाति दक्षिणेऽक्षणि विज्ञानात्मा हिरण्मय पुरुष ।
पश्यामस्तमसङ्गं न सज्जतेऽग्नौ न चाप्सु नान्यत्र ॥ ६ ॥

## ७ भूतात्मनः स्वर्गनरकादिलोकयात्रानिर्णयः ।

य संपराये मतभेदसंशयस्तत्रोच्यते भूतात्मनिर्णय ।
अनेकधाऽऽत्मान इहोपपादितास्तथा विभिन्ना गतयो निरूपिता ॥ १ ॥
भूतात्मनः कर्म्मगतिं स नाना लोकेषु संयाति वियाति भूय ।
स्वर्गे स आनन्दमुपैतिकाले दुःखं च भोक्तुं निरय स याति ॥ २ ॥

## ८—मृत्यु काले देहान्तरपरिग्रहनिर्णयः ।

मृत स-भूतानुशयो बहिर्भवन् सद्य शरीरान्तरमेति भौतिकम् ।
त्यक्त्वा च तद् गर्भदारमश्नुते, न चाशरीर क्वचिदेव तिष्ठति ॥ १ ॥

---

* यत्रास्य पुरुषस्य मृतस्य—अग्निं वागप्येति वातं प्राण चक्षुरादित्यं, मनश्चन्द्र, दिश श्रोत्रं पृथ्वीं शरीरम् आकाशमात्मा, ओषधीर्लोमानि, वनस्पतीन् केशा, अप्सु लोहितं च रेतश्च निधीयते—क्वायं तदा पुरुषो भवतीति। तौह (आर्तभाग—याज्ञवल्क्यौ) उत्क्रम्य मन्त्रयां चक्रतु—कर्मो ह तदूचतु। कर्म्म हैव तत् प्रशशंसतु ॥ पुण्यो वै पुण्येन कर्म्मणा भवति पाप पापेनेति ॥ (शत प० १४। ४। ७)

तदेतदेव श्रुतिराह च स्मृतिर्मृतस्य सद्योऽन्यशरीरधारणम् ।
नत्वेव मृत्योः समकालमस्य वा जन्म ग्रहं गर्भगतस्य भावयेत् ॥ ७ ॥

* 'तद् यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मान
मुप संहरति एवमेवायमात्मा इदं शरीरं निहत्याविद्यां गमयित्वाऽन्य
माक्रममाक्रम्यात्मानमुपसंहरति ॥ तद्यथा पेशस्कारी पेशसोमात्रामुपादायान्यन्नवतरं
कल्याणतरं रूपं तनुते, एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं
कुरुते, पित्र्यं वा, गान्धर्वं वा, दैवं वा, प्राजापत्यं वा, ब्राह्मं वाऽन्येषां वा भूतानाम्''
( शत प० १४ । ७ । २ ) ( बृहदा० । ४ । ४ । ४ ) ॥ इति श्रुतिः ॥ ८ ॥

स्मृतिरप्याह—व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति
यथा तृणजलौकैवं देही कर्म्मगतिं गतः ॥
( भागवते ) ॥ ६ ॥

## ९—मृत्युकाले कर्माधीनः काचित्को जन्मसंभवः ।

मृत्युक्षणे जन्मपरिग्रहोऽपिवा संभाव्यते कर्मवशादिह क्वचित् ।
अकर्म्म-सत्कर्म्म-विकर्म्मणाममी गतिप्रभेदा गहना विलक्षणा ॥ १ ॥

## १०—हंसात्मनो वायुदेहस्य भूवायावयस्थानम् ।

भूतात्मरूपं द्विविधं निरुक्तं विज्ञानपूर्कं भृशभूत सक्तम् ।
प्राज्ञस्य विज्ञानभृतस्य सेत्या, भूतानुरक्तस्य परत्र नेत्या ॥ १ ॥
देहप्रदाहोत्तरमेव भूतानुपक्तहंस· पृथगेतिदेहात् ।
वायव्यदेहश्चिरमत्र जीवान् इतस्ततः संचरति स्वतन्त्रः ॥ २ ॥
गन्धर्वेण गृहीता काप्यसुता श्रूयते माद्री ।
भूतावेशो नानादेशेषु च दृश्यते बहुधा ॥ ३ ॥
भूतोपशमाध्यायं पुनर्वसु प्रभृतयो ब्रुवते ।
तस्माद्धंसात्मानोऽध्यवसेयाः सर्वजीवानाम् ॥ ४ ॥

## ११—प्रेत्यभावान्तर काल निर्णयः ।

यः प्रेत्यभावान्तरकालसंशयः, तत्रोच्यते कर्म्मणि कालनिर्णयः ।
कर्म्मानुगः स्यादपि मृत्युवासरे किंवा सहस्राधिकवत्सरान्तरे ॥ १ ॥

## १२—योनिपरिवर्तनव्यवस्था ।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ १ ॥
प्राज्ञो महान्‌ वा परिवर्तते न चेत् स प्राह नरस्तर्हि पुनर्नरो भवेत् ।
योन्यन्तरं स्यान् महतश्च्युतिक्रमे यथा शुकोऽन्ये च कति स्मृता इमे ॥ २ ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ १६ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ १७ ॥

## १४—प्रेत्यात्मसत्ता सिद्धान्तः।

यत्तत्क्रमात्मा स विना न धर्मणा स्याच्चेन्द्रियाणि स्युरधिष्ठिति विना।
तस्मोच्यतेऽस्त्येव ॥ तस्य यातना देहं तु भूतानुशयानुभावितम् ॥ १ ॥

## १५—प्रेत्यसंज्ञानिषेधप्रतिषेधः।

आत्मानमाहुः खलु सप्रमाणा एषोऽविनाशीति परीक्षमाणः।
भूतेषु तिष्ठन्त्यखिलेषु सोऽयं यथा तथा श्रावयति श्रुतिर्नः ॥ १ ॥

१—तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ २ ॥
२—वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ ३ ॥
३—सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्।
आत्मविद्यातपोमूलं तद् ब्रह्मोपनिषत् परम् ॥ ४ ॥

इति ( श्वेताश्वतरे १ )

आपो यथात्मा सरसो विशुष्का वायुं गताः स्युः सरसः क्षयाय।
तथाऽयमात्मा वपुषो वपुष्टो बहिर्भवन् स्याद् वपुषः क्षयाय ॥ ५ ॥
कालत्रयन्यस्य रथस्य वात्मा विद्युत्प्रदीपस्य यथा तथाऽस्तु।
अमुष्य देहस्य तु चेतनात्मा विलक्षणो नास्य कदापि नाशः ॥ ६ ॥
रथे य आत्मास्ति न तस्य जाग्रत् स्वप्नः सुषुप्तिर्मृतिमोहमूर्छाः।
ततो रथे नास्ति तथाऽयमात्मा यथा शरीरे विभवन् स भाति ॥ ७ ॥
यदस्ति वातावरणं विद्युत्प्रदीप एतद्धि शरीरमस्य।
अर्चिस्तदात्मा निजयोनिनाशान्निर्वाणमेतीति वपुः प्रपातः ॥ ८ ॥
स्वयत्ननाशाच्च तथाऽयमात्मा निर्वाणमायाति सचेतनानाम्।
इति प्रदीपानुविधिं वदन्तो वैनाशिका आत्मविनाशमूचुः ॥ ९ ॥
अथापि तैरन्यशरीरयोगोऽभ्युपेयते पूर्वशरीरनाशे।
स्वकर्मसंतानवशात् तु नाना जन्मोत्तरं चाप्यपवर्गसिद्धिः ॥ १० ॥
यथा प्रदीपः परिवर्तनेऽयं भिन्नेषु वातावरणेषु काले।
तथाऽयमात्मा परिवर्तमानो भवत्यनेकेषु वपुःषु काले ॥ ११ ॥
एवं यदा मस्तु न चायमात्मा दीपार्चिषा साम्यमुपेत्यनण्डः।
तत्कर्मजन्यातिशयस्य तस्मिन्नशाहितस्य स्थिरता प्रतीमः ॥ १२ ॥
पूर्वानुभूतं पशुभिः समाधिः स्मर्यत्यमुष्य स्थिर एव भावः।
नैवास्थिरे त्वात्मनि स स्थिरः स्यात् संतानतोऽपि स्तु वृथाभिमानः ॥ १३ ॥

संतायमाना यदि भिन्न-भिन्नाः परानुभूतं न परः स्मरेत् स ।
परोऽपरीणो यदि कश्चिदेकस्तदा तमात्मानमिह ब्रवीमि ॥ १४ ॥

## १६—मरणोत्तरमात्मनोऽसत्त्वे प्रमाणश्रुतेस्तात्पर्य्यनिर्णयः ।

यत्तु प्रवक्ति स्म स याज्ञवल्क्यो न प्रेत्य संज्ञाऽस्ति, तदस्य याथार्थ्यं,
यथार्थ्यं, य आत्मा क्वचिदस्त्यकामो न प्रेत्य संज्ञा भवतीह तस्य ॥ १५ ॥
यः कश्चनाकामयमान आत्मा प्राणा न तस्य क्वचिदुत्क्रमन्ते ।
संभाव्यतेऽथैव लयस्तु तेषां ब्रह्मैव तद् ब्रह्म तदापि याति ॥ १६ ॥
मुख्यो य आत्मा परमश्चिदात्मा स कामतः सोमरसान्वितः स्यात् ।
स कामतः सूर्य्यरसान्वितः स्यात् स कामतो भौमरसान्वितः स्यात् ॥ १७ ॥
असौ परिच्छिन्नतमास्त्रयो रसा असीम्नि चिद्भूम्नि हिता स्वयोगतः ।
इत्थं यदच्छेदमसन्तमात्मना घटो घटव्योम्नि यथाऽवकल्पते ॥ १८ ॥
तेषां रसानामपवर्जनादिदं विशुद्धचिन्मात्रमिहावशिष्यते ।
विभौ गतिर्नास्ति ततो निराकुलं चिद्ब्रह्म चिद्ब्रह्म तदाऽपि याति सत् ॥ १९ ॥
यो नैहिकान् कामयते तु कामान् ततोऽपवृक्ता पृथिवीरसाः स्युः ।
स्वर्ग्यान् स कामान् लभतेऽथ पृथ्व्यां नैतस्य जन्मास्ति, स मुक्तआत्मा ॥ २० ॥
नामुष्मिकान् कामयते च कामान्, ततोऽपवृत्ता द्युरसा अपि स्युः ।
स ब्राह्मणस्त्वमितः स्वलोकं पृथ्व्यां च सूर्ये च न याति भोगम् ॥ २१ ॥
कामैस्त्रीवैरपवृज्यमानः संपद्यते शुद्धतरश्चिदात्मा ।
विहाय कर्म्माणि च नामरूपे परात्परं नैति स एकमात्मन् ॥ २२ ॥
तथा च गाथा श्रूयते—

१—यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ॥ २३ ॥

अथापि या चिद् प्रकृतिः समस्तो मायश्चितः सर्वविधा रसास्ते ।
अविद्यया संभ्रमन्ति, विद्यातिशयात स्वां प्रकृतिं गता स्युः ॥२३ ॥
विद्यातिशय्यात् क्रमशश्च कामाः परा हृता स्युर्निखिला रसास्ते ।
चिद्रूपतां यान्ति, ततोऽखिलास्ते प्राणा इहैव प्रलयं व्रजन्ति ॥ २४ ॥
तथा च गाथा श्रूयते—

१—विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥ २६ ॥

## १७—प्रेत्यात्मनः सुखदुःखावश्यंभावः

यत्तूच्यते प्रेत्य सुखं न दुःखं स नूनमज्ञानकृतः प्रलापः ।
आत्मास्ति चेत् प्रेत्य, तदास्य न स्याद् दुःख सुखं चेति न संभवोऽस्ति ॥ १ ॥
प्रेत्येप आत्मा समनाः सहेन्द्रियः संस्कारवानित्यवदन् महर्षयः ।
तत्रेन्द्रियाणां विषयेषु वृत्तयः स्युर्वेदनीये मनसस्तथा धिया ॥ २ ॥

## ८ —सांपरायिकाणां गति-मार्ग-लोकानां नान्तरीयकता ।

आत्मास्ति चेत् तस्य गतिश्च यात्रा मार्गश्च लोकोऽपि च संभवेयुः ,
स्थानच्युतिस्तस्य गतिः स लोको यत्र स्थितिर्यत्र गतेर्निवृत्तिः ॥ १ ॥
मार्गप्रभेदाद् गतिलोकभेदो लोकप्रभेदाद् गतिमार्गभेदः ।
गतिप्रभेदाच्च तयोः प्रभेदो नान्योन्यमन्योन्यविनाकृतं स्यात् ॥ २ ॥

## १९—मार्गारम्भणानि ।

कर्माणि[1] कालाश्च[2] शरीरनाड्यो[3]ऽन्तरिक्षनाड्यो[4]ऽप्यतिवाहकाश्च[5] ।
एभिः कृतः पञ्चभिरस्ति योऽध्वा तेनायमात्मा क्रमते परत्र ॥ ३ ॥
विद्यापि कर्मैव गतौ निमित्तं प्रपद्यते किन्तु तदात्मरूपम् ।
विद्यावशात् कर्मबलापकर्षौ नैष्कर्म्यविद्याऽऽत्मगतिं रुणद्धि ॥ ४ ॥

## २०—कर्माणि ।

देशः कालः पात्रं द्रव्यं श्रद्धेति पञ्चभिस्त्वेभिः ।
सहितो यज्ञो जनयति यं संस्कारं तदुच्यते कर्म ॥ ५ ॥
यैः सा सुषुम्णा गतिरस्ति, या यैरिडागतिः, पिङ्गलया गतिर्यैः ।
ऊर्ध्वा गतिर्यैरधरा गतिर्यैः कर्माण्यतोऽनेकविधानि तानि ॥ ६ ॥

## २१—शरीरनाड्यः ।

तिस्रोऽत्र नाड्यो नरविग्रहेऽधरा त्विडा, सुषुम्णाऽन्तरुदक् तु पिङ्गला ।
सुषुम्णयोत्क्रम्य वियत् सुषुम्णया सूर्यं गतः स्कम्भमुपैति मुक्तये ॥ १ ॥
नाड्येडयोत्क्रामति यः स दक्षिणां नाड्येडयाऽऽत्तः पितृयाणतो गतिम् ।
भुक्त्वा स्वकर्माणि च कर्मदोषतः पुनर्भुवं प्राप्य स जन्मभाग् भवेत् ॥ २ ॥
शरीर आत्मोत्क्रमते त्विडातः स्यात् पिङ्गलातश्च निसर्ग एषः ॥
कश्चित् सहस्रेषु कदाचिदेकः सुषुम्णयाऽप्युत्क्रमते विशुद्धः ॥ ३ ॥
येषां सुषुम्णा गतिरस्ति तेषामुत्क्रामति ब्रह्मकपालभेदात् ।
तस्यैष्यते ब्रह्मपथोऽथ सव्या सव्यापृतो देवपथे च पित्र्ये ॥ ४ ॥
विद्योदयो यस्य निवृत्तकर्मणो निवृत्तकामस्य च शान्तचेतसः ।
तस्याप्यते ब्रह्मपथोऽथ याजिनां तपस्विनां देवपथश्च पैतृकः ॥ ५ ॥

> विद्यया तदारोहन्ति यत्र कामाः परागताः ।
> न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥ ६ ॥

मीमांसाऽऽनन्दानां बहुधा श्रुतिषु प्रदर्शिताऽमितैः ।
तन्मात्रायाः क्वचिदपि परमा काष्ठा ध्रुवं प्रभवेत् ॥ ५१ ॥
सैवं परमा काष्ठा यत्रानन्दस्य भाव्यते क्वापि ।
स स्वर्गस्तत्रापि च नानात्वं तारतम्यात् स्यात् ॥ ५२ ॥
एवं दुःखाधिक्यं भूलोकापेक्षया यत्र ।
संभाव्यते स नरकः स यथातिदिग्गनः स स्यात् ॥ ५३ ॥
सुलभा यत्रातितरां सामग्री दुःखभोगाय ।
नरकः सोऽन्यः स्वर्गः सुखभोगोपयिकसामग्र्या ॥ ५४ ॥

## ३१—स्वर्गचातुर्विध्यम् ।

स्वर्गचतुष्टयमस्ति, त्रिविष्टपत्वात् त्रिधा त्वन्यत् ।
ब्रह्मस्य विष्टपं यत् तदिह चतुर्थं सुरं धाम ॥ ५५ ॥
अधमः परमो मध्यम उत्तम इति भेदतो य इमे ।
स्वर्गाः सन्ति चतुर्धा तेषां रूपाणि कथ्यन्ते ॥ ५६ ॥

## ३२—अधमः स्वर्ग आहवनीयाख्यो देवात्मकृतः ।

ज्योतिष्टोमात् स्वर्गो विधीयते सोऽधमः स्वर्गः ।
आहवनीयः स्वर्गो वाजसनेयश्च तौ कथितः ॥ ५७ ॥
पावो ह्यग्निमयूखा अहानि पृथ्व्याः पृथिव्युरयाः ।
सन्ति रथन्तरसामनि पङ्क्तिस्तोमाः संततः पृथिव्यह्नाम् ॥ ५८ ॥
त्रिवृदथ पञ्चदशोऽन्यः सप्तदशोऽन्यस्तथैकविंशोऽन्ये ।
त्रिणवोऽन्यश्च ततोऽन्यस्तथा त्रयस्त्रिंश इत्याहुः ॥ ५९ ॥
चत्वारोऽग्नेः स्तोमा स्तोमौ सोमस्य तत ऊर्ध्वम् ।
स्तोमचतुष्टयभेदादेकोऽप्यग्निश्चतुर्विधो भवति ॥ ६० ॥
त्रिवृदथ पञ्चदशोऽयं सप्तदशश्चैकविंश इति कृत्वा ।
स चतुष्टोमो ज्योतिष्टोमस्ते ज्योतिषां स्तोमाः ॥ ६१ ॥
सोऽग्निष्टोमोऽप्युक्तः स्तोमाश्चत्वार आतता अग्नेः ।
आहवनीये ह्यग्नौ स चतुष्टोमो विधीयते यज्ञः ॥ ६२ ॥
अधिभूताग्निद्वाराऽध्यात्माग्नेराधिदैविके ह्यग्नौ ।
वाचा मन्त्रैः सोमश्लेषणतो यजति यज्ञः स ॥ ६३ ॥
यजनं संगतिकरणं देवानां सोमतः कृताच्छ्लेषात् ।
अद्भिः श्लेषाद् यद्वच्चूर्णानां संगतिः क्रियते ॥ ६४ ॥
रथन्तरे पृथिव्या अग्नावग्निस्तु यस्य शरीरः ।
यजते स हि यजमानो मानुषदेवप्रभेदतो द्व्यात्मा ॥ ६५ ॥

देहोऽस्य हविर्वेदिस्तत्राहवनीय इष्यतेऽस्य शिरः ।
तत आरभ्य रथन्तरसामाग्नेयं महावेदिः ॥ ६६ ॥
यूपस्तदन्तनिहितः स एकविंशोयमः सूर्य्यः ।
यः सूर्य्य एकविंशो यूपस्तस्योपलक्षणं क्रियते ॥ ६७ ॥
आहवनीयस्तत्रस्थेयामर्वाग् विनीयते यूपात् ।
तेन च सूर्याद्वर्वाक् सप्तदश स्तोम उपलब्ध. ॥ ६८ ॥
आहवनीयेऽग्नौ वाचा सोमं जुहोति यजमान ।
तेनाहवनीयेऽस्मिन् यजमानाग्ने. पदं हितं भवति ॥ ६९ ॥
अग्निष्टोमाद् यज्ञदेहाग्निः स्याद् रथन्तराग्निहित. ।
दैहिक-जनमोके मानुष आत्मेति देवरथरूढ. ॥ ७० ॥
आहवनीयस्त्वग्निर्यू पार्वाग् विधीयते तेन ।
सूर्याद्वर्वागात्मा सप्तदशे स्तोम आस्थितो भवति ॥ ७१ ॥
अग्निष्टोमो ज्योतिष्टोमस्तेनास्य देहिकोऽप्यग्नि. ।
सप्तदशान्तः प्रततस्तत्र देवोपपद्यते सुख ॥ ७२ ॥
आहवनीयः सोऽर्वाक् सूर्यस्य स्कम्भपरिसरग. ।
तत्र च सूर्यलदेशं गत आत्मा सूर्यज. सुखी भवति ॥ ७३ ॥
यज्ञात्तु दैव आत्मा योऽस्य संपद्यते तेन ।
सहचर आत्मा मानुष एव स्वर्गं प्रयात्यत्र ॥ ७४ ॥
एतस्मात् पुनरस्मात् स्वर्गाद् भुक्त्वा स्वकर्माणि ।
पुनरिह पृथ्व्यां जन्म ग्रहीतुमायाति भुक्तशेषेण ॥ ७५ ॥
महतो यज्ञात् परमं सुखमतियज्ञात् स इन्द्रत्वम् ।
स्वर्गे न त्वपवर्गं लभते यज्ञाद् ऋते चयनात् ॥ ७६ ॥

## ३३—त्रिणाचिकेताख्य-स्वर्ग्याग्निकृताः स्वर्गा अधममध्यम-परमोत्तमाः ।

१ भौमोऽस्ति याज्ञिकोऽग्निर्दिवि सौरोऽसौ न चीयमानोऽस्ति ।
सप्तदशे चितिरनयोः प्राजापत्ये स दिव्योऽग्निः ॥ ७७ ॥
दिव्येऽग्नौ यज्ञाग्निद्वारा यजमानदेहाग्नि ।
यः संक्रियते चयनात् स स्वर्ग्योऽग्निस्त्रिणाचिकेताख्य. ॥ ७८ ॥
एष त्रिणाचिकेतो नयतेऽध्वर्यं तमत्र सप्तदशे ।

( अधम स्वर्ग )

२ अग्निचितं त्वयमग्निस्तमेकविंशे नयेत् सूर्ये ॥ ७९ ॥

( मध्यम स्वर्ग )

अष्टादशमारभ्य स्तम्भ. स्यादाचतुर्विंशात् ।
तत्रैकविंश एष प्रतपति सूर्यः पर. स्वर्गः ॥ ८० ॥

## ३५—मध्यमः स्वर्गः स्कम्भाख्यः ।

स्कम्भस्य मध्यवर्ती सूर्यः स्वर्गः स इत्थमाख्यातः ।
अथवा कृत्स्नः स्कम्भः स स यमः स्वर्ग आख्येयः ॥ ९५ ॥
कौषीतकिनः स्वयन्त्यष्टादशतोऽयमाचतुर्विंशात् ।
स्वर्गः सप्तविभक्तः सप्तस्वर्गास्त उच्यन्ते ॥ ९६ ॥
[१८]अग्नि[१९]र्वायु[२०]र्वरुणा[२१]दित्या[२२]विन्द्रः प्रजा[२३]पति[२४]र्ब्रह्म ।
एषां येन धृतः स्यात् तल्लोकस्थः स आत्मोक्तः ॥ ९७ ॥
भौमप्राणाकृष्टो जीवात्मा यथा भवति ।
एवं तत्तद्देवेनाकृष्टस्तद्गतो भवति ॥ ९८ ॥
पञ्चालिकादिका ये सप्तर्षिःप्रभृतयो मार्गाः ।
यावत् तेष्वपमा मा तावत् स्यादग्निलोकस्थः ॥ ९९ ॥
सप्तदशेऽपि स्तोमे गत एषोऽग्निलोकस्थः ।
अग्नेरनुगतः सन् स ऊनविंशे गतो भवति ॥ १०० ॥
सप्तविभक्तः स्वर्गः स एक एवास्ति यः स्कम्भः ।
पादेऽस्य त्रयस्त्रिंशोऽपि चत्वारिंशं च ॥ १०१ ॥

## ३६—सन्दिहानेभ्योऽनभिज्ञेभ्य आदेशाख्यम् ।

[(१)]अहवनीयः [(२)]स्कम्भः सप्तवि[(३)]शाधिकत्रयं च ।
[(४)]कश्चेति विभागात् स्वर्गाश्चत्वार आख्याताः ॥ १०२ ॥
ते स्वर्गाः प्रति वस्तु वैदिकविज्ञानतः शक्याः ।
न च मूढैर्गम्या विदुषां प्रत्यक्षयन् ते स्युः ॥ १०३ ॥
कर्म्माणि दुःख भुक्त्यै सुखभुक्त्यै सन्ति मोक्षमुक्त्यै च ।
सर्वे धर्मग्रन्था एतैरेवोपपाद्यन्ते ॥ १०४ ॥
पापत्वं पुण्यत्वं बहुभिर्योगिभिः परीक्षितं पूर्वैः ।
शक्या सा च परीक्षा वैदिकविज्ञानशिक्षया कर्तुम् ॥ १०५ ॥
अपरीक्ष्य नापवेयश्च का यो विज्ञानभावनाशून्यैः ।
विद्वद्भिर्भवितव्यं श्रद्धया दीर्घदर्शिनां दृष्टिः ॥ १०६ ॥
आप्तैः प्रदर्शिते पथि नास्मानेऽपि कुर्युरनभिज्ञाः ।
भगवान् कठो यमस्य च वचनं साधु प्रदर्शयत् पूर्वम् ॥ १०७ ॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १०८ ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ॥ १०९ ॥
दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्त ॥ ११० ॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ १११ ॥
पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ ११२ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ ११३ ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ ११४ ॥



इति त्रिशिखिब्राह्मणोपनिषदि सर्वोत्तमवाद
प्रतिवादः प्रथम खण्डः ।

( २ )

# अथायमप्रामाण्यवाद प्रतिवादो द्वितीयः खण्ड आरभ्यते ॥

## १–ज्ञानप्रामाण्यसिद्धिः ।

१ संशय्य ये संशयवादिनोऽन्ये चेदं च चेत्तारमिहेश्वरं च ।
अशेषसंदिग्धमिदं समस्तं यद्भाति तद् भ्रान्तमिति प्रतीमः ॥ १ ॥
सर्वं प्रमाणं यदप्रमाणं न हि प्रमाणाय परं प्रमाणम् ।
इत्थं यदुक्तं तदसत् प्रमाणं स्वतः प्रमाणं रविवद्विभाति ॥ २ ॥
अभास्वतो भासयितुं पराभा अपेक्षते भास्वति नास्त्यपेक्षा ।
तद् भास्यमानः स्वत एव भास्वद्भास्वद्भासयते स्वभावात् ॥ ३ ॥
तस्माद् ध्रुवं ज्ञानमिदं स्वरूपात् प्रमाणमेवास्ति परानपेक्षम् ।
ज्ञानं भवेत् किन्तु न तत् प्रमाणं भवेदिति व्याहतभाषितं स्यात् ॥ ४ ॥
ज्ञानं तु नास्तीति य आह ज्ञातामव्यक्ति यां तामिह स निहन्ति ।
धन्यात्मभूतेऽज्ञनयन्समासां मामित्थं प्रजल्पी स निगूहति स्वम् ॥ ५ ॥
ज्ञानं न चेत् स्याज्जडवत् समस्ते शून्ये विचारावसरः क तस्य ।
इदं जगत् पश्यति वक्ति सद्वासद्वा न पश्यामि न वच्मि वक्ति ॥ ६ ॥
यस्तद्विभाति जगदप्रकारं तज्ज्ञानमेकं ध्रुवमस्ति सत्यम् ।
ज्ञाने स्थितार्था अखिला जगत् स्याज्ज्ञानं तु तद्विभ्रममुख्यमूलम् ॥ ७ ॥
ज्ञाने गृहीता विषया असत्या सत्या द्विधाऽपीति यथा तथास्तु ।
ज्ञानं तु तद्ग्राहकमेतदेकं नास्तीति च पातयतेऽत्र वक्तुम् ॥ ८ ॥
अर्थैरहितं ज्ञानमतोऽक्षदोषाद्दोषोऽर्थविषानुविद्धः क्वचित् स्यात् ।
सदोषता वा रहितार्थविषया दोषप्रविषयान्तर्गतिगः स्यात् ॥ ९ ॥
भवतामत स्वीयमिदं विवेकज्ञानं विशुद्धं तदिह प्रमाणम् ।
धूमावृतं दूषितमन्यज्योति स्वरूपेण न दूषितं स्यात् ॥ १० ॥

## २–प्रत्यक्षप्रामाण्यस्थापनम् ।

१ प्रत्यक्षमथानुमितिश्च शाब्दं ज्ञानप्रभेदा प्रवदन्ति किन्तु ।
प्रत्यक्षमत्र प्रथमं तदीयप्रामाण्यतोऽन्यद् भवति प्रमाणम् ॥ ११ ॥
प्रत्यक्षमेके विदुरप्रमाणं यदप्रमाणं न हि तत् प्रमाणम् ।
ज्ञानं हि तथाऽऽरादुपनीतहेतु कथं भवेत्तन्न तु प्रमाणम् ॥ १२ ॥

२ सत्त्वेन्द्रियस्थानसमुद्भवा ये तद्यादृशास्तादृशिका हि भावाः ।
प्रत्यक्षतस्तान् प्रविशन्ति तस्माद् ध्रुवं प्रमाणानि तदिन्द्रियाणि ॥ १३ ॥

मनः प्रकाशाय नियुज्यते चेत् तत् स्यात् प्रकाशं जनयत् प्रमाणम् ।
ज्ञानं तु दुष्टं यदि दोषयोगात् प्रामाण्यमक्षुण्णममुष्य तर्हि ॥ ६४ ॥
प्रमाणमेव व्यवहारकल्पे दोषान् कुतश्चिन्मतमप्रमाणम् ।
अवग्रहे त्विन्द्रियदोषतोऽस्त्यप्रमाणमीहासु मनःस्थदोषात् ॥ ६५ ॥
स्यादागमे दोषेऽवगमोऽप्रमाणं तेषामथैकस्य च दूषितत्वे ।
अयं भवेद्दूषितमन्वितत्वाज्ज्ञानं त्रिभिस्तत्कृतमप्रमाणम् ॥ ६६ ॥
दोषान्वितावग्रहमाप्य दुष्टामीहां मनो वर्तयतेऽथ दुष्टा ।
ईहात्मनि प्राप्य तनोति दुष्टं ह्यवायमित्थं परतोऽन्यथात्वम् ॥ ६७ ॥
इत्थं व्यवस्थां कुरुते प्रमाणाप्रमाणयोर्यद्व्यवहारतस्तत् ।
लोके नियुक्तं परमार्थतस्तु ज्ञानं प्रमाणं हि सदा स्वरूपात् ॥ ६८ ॥
शिशोः पशोर्ज्ञानमवग्रहादौ सामर्थ्यभावात्तु भवत्यपूर्णम् ।
दोषादपूर्णं प्रतिबन्धतःस्यात् ज्ञानं तदत्राखिलमस्त्यपूर्णम् ॥ ६९ ॥
स्यादप्रमाणं यदि चेदपूर्णं तर्ह्यप्रमाणं प्रभवेत् समस्तम् ।
सर्वं ह्यपूर्णं च सदोषमेतन्नास्त्यप्रमाणं न ततोऽनृतं वा ॥ ७० ॥
अपूर्णतायामपि यावदस्ति ज्ञानं ध्रुवं तावदिह प्रमाणम् ।
अत्यल्पमप्यत्तमनल्पमम्भो मिष्टं न चेत् तन्मधुनास्त्यमिष्टम् ॥ ७१ ॥
तत् पीतशंखावगमेऽपि पीतं दृष्ट्वाक्षिपित्ते भवति प्रमाणम् ।
निवर्तयेद्दोषमथ प्रपूर्णं ज्ञानं यथा स्यात्तदिह प्रकुर्यात् ॥ ७२ ॥
ज्ञानं च सत्येत्युपलब्धिरूपे सा वित्तिरुक्ता स च वेद उक्तः ।
वेदाः प्रमाणं बहिरस्तु मा वा सतोऽसतो ज्ञानमिदास्ति रूपम् ॥ ७३ ॥

( इति विशिष्ट त्रिसत्योपनिषदि अप्रामाण्यवाद-
प्रतिवादो द्वितीयः खण्डः ॥ ( २ ) ॥

—:०:—

# अथ जीवजगत्सर्गवादप्रतिवादस्तृतीयः खण्डः ( ३ ) ॥

## १—तत्त्वदर्शनसन्दर्भक्रमः ।

असद्धि तत्त्वं किमपीदमस्मादसत् समस्तं जगदुद्बभूव ।
यथाहि कर्मास्थिरमस्त्यचित् नकोऽपीश्वरमभ्यस्मि हि धर्मरूपम् ॥ १ ॥
इत्येक आहुः श्रमणाः, परे तु प्राहुर्जगत् सर्वमिदं सदस्ति ।
तन्मूलमेतद्धि भवेत्सत्. सा प्रवाहनित्या प्रकृतिः सती स्यात् ॥ २ ॥
द्रव्यं विशिष्टं तु गुणक्रियाभ्यां सत् तस्य सामान्यविशेषरूपा ।
सत्ता तया यत् समवेतरूपं द्रव्यं तत् कार्यमिदं जगत् स्यात् ॥ ३ ॥
वैशेषिको वाद इति द्वितीयस्तत्राचिदेवास्त्यचितं पृथङ्न ।
गुणैस्तु बुद्ध्यादिभिरस्त्यचिद्भिर्द्रव्यं विशिष्टं खलु चेतना सा ॥ ४ ॥
तृतीयवादः पुनरत्र सांख्यो द्वे तत्र तत्त्वे चिदचित्स्वरूपे ।
अचिज्जगद् व्यक्तमभूदचित्तोऽव्यक्तादियं चित् पुनरस्य भोक्त्री ॥ ५ ॥
पश्यन्ति न त्वीश्वरमत्र वादे सर्गं प्रकृत्यैव जगद्विधानम् ।
योगात्मक कर्मविशेषयोगाशक्तिर्न चेशः फलदः पुराणः ॥ ६ ॥
वादास्त्रयस्त्वचिदां स्थितिं तेऽपि साधु निरूपितास्ते ।
येषामतदुक्त्वैव पृथक् पृथक् ते वादं चतुर्थं तु वयं वदाम ॥ ७ ॥
अचिच्च चिच्चास्ति तथेश्वरश्च त्रितयमेतद् भवति त्रिसत्यम् ।
अचिच्चिदीशाननिविष्टरूपं ब्रह्मास्ति तच्च जगदप्यनन्यत् ॥ ८ ॥
पश्याम इत्थं, तदिदं विशिष्टत्रिसत्यवाद सुनिरूपयाम ।
अस्तीश्वरो नः शरणं विशेषात् तद्दर्शनार्थं तु न प्रयत्न ॥ ९ ॥

## २—ज्ञानौपयिकजीवसिद्धिः ।

यदेतदाभाति निगूहितं तत्र शक्यते स्वानुभवैकमानात् ।
संभाव्यते नैतदमूलमस्य क्वान्यत्र मूलं यद् महिम्ना स्यात् ॥ १ ॥
लोके यथा वस्त्ववभासमूलप्रभा महामण्डलमूलमेव. ।
सूर्यान्तरे तिष्ठति तद्वदत्राप्यहं जगज्ज्ञानविकाशमूलम् ॥ २ ॥
ज्ञानं प्रकाशो यदिदं द्विधाहं यत् कन्दलं ज्ञानमयं स आत्मा ।
ये रसमयोऽस्त्यात्मगुणः स तेभ्यो ज्ञाने विशेषाः स्युरिहेन्द्रियोत्थाः ॥ ३ ॥
एकाश्रयत्वं तु धियां बहूनामस्या मनस्यार्पणतोऽत्र तासाम् ।
आत्मा न चेत् स्मरणं न वाशा न प्रत्यभिज्ञादिरपि क्वचित् स्यात् ॥ ४ ॥

दृष्टादृष्टं म्रियते न दृष्टौ दृष्टेः शमेऽपि स्मृतिरस्त्यदृष्टात् ।
तस्मात् पृथग् यत्र सदृष्टिजन्यः संस्कार उद्बुध्यति मे स आत्मा ॥ ५ ॥
दृष्टं श्रुतं चास्ति ममेति भिन्नौ धर्मौ तु यत्राभिनयत्यभेदात् ।
स दर्शनेऽपि श्रवणेऽपि साम्याद् व्याप्तोऽस्त्यविज्ञातृतमः स आत्मा ॥ ६ ॥
केचिद्विदुर्ज्ञानमिदं न रूढं सुषुप्तिमूर्च्छादिषु तद्विलोपात् ।
ज्ञानं प्रकाशप्रकृतीदमस्यां जीवद्दशायां न कुतो विभायात् ॥ ७ ॥
तस्माद्ध्रुवं यौगिकमिन्द्रियोत्थं मन्यामहे ज्ञानमनेकमूलम् ।
अथेन्द्रियस्नायुविशिष्टयोगात् तात्कालिकं तद्भवति प्रभास्वत् ॥ ८ ॥
तैलाग्निवर्त्यादिविशिष्टयोगाद्दीपार्चिरुत्पद्य विभाति यद्वत् ।
तात्कालिकं ज्ञानमुदेति तद्वत् प्रवाहि कालेन विपद्यते तत् ॥ ९ ॥
अस्मिन् मतेऽप्यन्तरमस्ति किञ्चिद् द्रव्यं निरूढं बहिरर्थयोगात् ।
विज्ञानरूपाय तु जायते यन्मन्ये तमात्मानमयं स जीवः ॥ १० ॥
ज्ञानं द्विधा निर्विषयं निरूढं स्याद् यौगिकं वैषयिकं तदन्यत् ।
अर्थाद्ययोगे तु यदद्वयं तत्र पश्यति द्रष्टपि सुप्यदग्वत् ॥ ११ ॥
देहे तता लोमनखाग्रमेकं व्याप्नोति रूढं विषयाप्रभासि ।
आत्मा समेऽर्थोपहितेन्द्रियस्पृक् स्नायुप्रसङ्गे न धियं करोति ॥ १२ ॥
बाह्यार्थयोगादनुभूतिसंज्ञं संस्कारयोगात् स्मृतिसंज्ञमित्थम् ।
ज्ञानं द्विधात्मा सृजतीह शून्यं ज्ञानं सुषुप्तावथ शून्ययोगात् ॥ १३ ॥
य एष निर्धारयते य इत्थं विचिन्तयन् संशयमातनोति ।
सोऽहं ध्रुवं कश्चिदिहास्मि सत्यं ज्ञानस्य तत्सर्वविधस्य मूलम् ॥ १४ ॥
यस्तोलयन् सत्यमसत्यमेकं निर्धारयत्यर्थमयं स आत्मा ।
नैतन्मनस्तत्क्षणिकं तदन्यद्यान्यश्च नालं प्रभवेत् तुलायाम् ॥ १५ ॥
यो निर्णयं संशयमाप्नुवन् वा तं तं च सत्यापयमान आह ।
सत्यत्वमायाति यतस्तदर्थं सत्यात्मना तिष्ठति य स आत्मा ॥ १६ ॥
मूर्ध्नि स्तने सक्थनि पदेऽथ पृष्ठे स्पृष्टं क्वचित् तन्मनसावधत्ते ।
सर्वैर्मनोभिस्तु य एक पयोद्भवोऽखिलं भासयते स आत्मा ॥ १७ ॥
ज्ञानं न तं मां व्यतिरिच्य किञ्चिज्ज्ञानं तथेदं व्यतिरिच्य नाहम् ।
अहं हि तज्ज्ञानमिदं समस्तं यद्यत्तदाभाति तदस्ति सत्यम् ॥ १८ ॥

इति ज्ञानमूलाजीवसिद्धिः ।

## ३—क्रियोपयिकजीवसिद्धिः । २

नर पशुर्वा सहसाऽऽक्रमेत स्वतः परं पश्यसि निर्बलं चेत् ।
पलायते पश्यति चेद्बलिष्ठं स्वतुल्यवीर्यं च दयाऽऽश्रयते ॥ १९ ॥
क्रिया द्विधा यद्भवजन्म तु मे ततोऽधिकं कर्म फलं सुखं चेत् ।
तदेव तत्कर्म करोति दुःखावहे तु तस्माद्विनिवर्तते सः ॥ २० ॥

इत्थं स्ववीर्यं परवीर्यमित्थं सुखस्य मानामपि दुःखमानाम् ।
यस्तोलयत्याशु तुलात्मना तं मन्ये स्वमात्मानमिहास्मि सोऽहम् ॥ २१ ॥
क्वचित्पदे कण्टकविद्धमात्रः सद्यः पदं दूरयितुं नियुङ्क्ते ।
करं तदुद्धर्तुमपि प्रयुङ्क्ते सेहा यदाज्ञावशतः स आत्मा ॥ २२ ॥
चक्षुर्यतो, याचि पलं पुरस्तादुत्थाय संसज्जत एष आत्मा ।
यन्मक्षिका निष्पतने परागात् सास्याः क्रियोदेति यतः स आत्मा ॥ २३ ॥

इति क्रियामूला जीवसिद्धिः ।

## ४—अर्थौपयिकजीवसिद्धिः । ३

अग्निं च वायुं च तथेन्द्रमेतांस्त्रीनात्मनो भावयते शरीरे ।
जीवत्ययं वर्ष्मणि यावदूष्मा श्वासस्तथोन्मेष इहाक्ष्णि यावत् ॥ २४ ॥
अग्निं तु वैश्वानरमाह, वायुं श्वासं, तथा विद्युतमिन्द्रमाह ।
अक्ष्णोः क्वचिन्नीलहरित्प्रकाशः प्रद्योतते सूर्यवदिन्द्र एषः ॥ २५ ॥
यो विद्युतो व्यद्युतदा स एवाध्यात्मं मनश्चाप्येतीव शश्वत् ॥ [ केनो प० ४।४ ]
हृत्स्थः स इन्द्रोऽक्ष्णि भाति भास्वान् दिवः स आदित्य इहोपपन्नः ॥ २६ ॥

इत्यर्थमूला जीवसिद्धिः ।

## ५—ज्ञानक्रियार्थमूलानामिन्द्रवाय्वग्नीनां तद्भिन्नाश्रितत्वम्

शिरो गुहामिन्द्र उरोगुहामयं वायुर्गुहामग्निरयं तथोदरीम् ।
देहेऽधितिष्ठन् स्वपुरीमिमामखिलं दहं प्रशास्त्येष परात्परो यतः ॥ २७ ॥
भिन्नालयः सन्ति तथाप्यकस्मादेकव्यपाये त्रितयं व्यपैति ।
तस्मात् त्रयोऽप्येकगताः क्वचित् स्युस्तद् ब्रह्म तस्मिन् महिमान एते ॥ २८ ॥
मूर्ध्नीन्द्रमा वक्षसि वायुरग्निः कुक्षौ त्रिलोक्या हि रसालयस्ते ।
चान्द्रं चतुर्थं च मनोऽस्ति यस्मिन् वर्गः स आत्मा न परोऽहमस्मि ॥ २९ ॥
गुणाः परार्थास्त इमे परस्पराविरोधतः कस्यचिदात्मनः प्रभोः ।
वशे स्थिताः स्वस्वविभिन्नकर्मणा निदेशमस्यानु चरन्तिसन्ततम् ॥ ३० ॥
ज्ञानानि चेष्टा अपि धातवोऽमी त्रिभिस्त्वमीभिः कृत एष कायः ।
त इन्द्रवाय्वग्निहिता हि भावालयस्त्वमी ब्रह्मणि सन्ति बद्धाः ॥ ३१ ॥

## ६—इन्द्रवाय्वग्नीनामाश्रयस्यात्मत्वे प्रमाणश्रुतयः ।

उपनिषदि श्रावयति ब्रह्मणि निहितानिमांस्तलवकारः ।
पञ्चाक्षरेऽव्ययेऽस्मिन् ब्रह्मण्येतेऽव्ययस्त्रिविधाः ॥ ३२ ॥

(१) “ब्रह्म ह देवेभ्यो विजिग्ये।
तस्य ह ब्रह्मणो विजये देवा अमहीयन्त—
अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति।
तेभ्यो ह प्रादुर्बभूव।
तन्न व्यजानन्त—किमिदं यक्षमिति॥
अथेन्द्रमब्रुवन्—विजानीहि किमेतद् यक्षमिति।
॥ तस्मिन्नेवाकाशे स्त्रियमाजगाम। सा ब्रह्मेतिहोवाच।
ब्रह्मणो वा एतद्विजये महीयध्वमिति।
ततो हैव विदांचकार ब्रह्मेति।
तस्माद्वा एते देवा अतितरामिवान्यान् देवान्—
यदग्निर्वायुरिन्द्रः। ते ह्येनन्नेदिष्ठं पस्पर्शुः।
तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान्।
स ह्येनन्नेदिष्ठं पस्पर्श। स ह्येनत् प्रथमो विदांचकार ब्रह्मेति।
तस्यैष आदेशो यदेतद् विद्युतो व्यद्युतद्।
यदेतद् गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः ॥ १ ॥

इति ॥ एतेनाग्निवाय्विन्द्रेभ्योऽतिरिक्तस्तेष्वनुस्यूतः कश्चिद् ब्रह्मपदार्थो जीवात्मेति सिद्धम् ॥ १ ॥

अपि च स एवाह——

(२) केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥
श्रोत्रस्य श्रोत्रं, मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः।
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥
न तत्र चक्षुर्गच्छति, न वाग् गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशि—
ष्यात्—अन्यदेव तद्—विदितादथो अविदितादधि ॥
यद् वाचाऽनभ्युदितं येन वागभ्युद्यते। यन्मनसा न मनुते येनाहुर्मनो मतम् ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ” ॥ २ ॥

इति । एतेन सर्वेन्द्रियेष्वनुस्यूतः सर्वेन्द्रियप्रवर्तकोऽतीन्द्रियः कश्चिदर्थो जीवात्मेति सिद्धम् ॥ २ ॥

अपि चाह छान्दोग्योपनिषदि भगवान् प्रजापतिः——

“यत्रैतदाकाशमनुविषण्णं चक्षुः ॥ चाक्षुषः पुरुषः । दर्शनाय चक्षुः ॥ १ ॥
अथ यो वेद—इदं जिघ्राणीति स आत्मा । गन्धाय घ्राणम् ॥ २ ॥
अथ यो वेद—इदमभिव्याहराणीति स आत्मा । अभिव्याहाराय वाक् ॥ ३ ॥
अथ यो वेद—इदं शृणवानीति स आत्मा । श्रवणाय श्रोत्रम् ॥ ४ ॥
अथ यो वेद—इदं मन्वानीति स आत्मा । मनोऽस्य दैवं चक्षुः ।

स वा एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ।
तं वा एतं देवा आत्मानमुपासते "—इति ॥ ( छा० ८ । १२ )

इत्थं चायं सर्वेन्द्रियेष्वनुस्यूतः सर्वेन्द्रियाभिमानी सर्वेन्द्रियोपलब्धविषयाभिज्ञः कश्चिदर्थो जीवात्मेति सिद्धम् ॥ ३ ॥

बृहदारण्यकश्रुतिरप्याह—

स एष इह प्रविष्ट आ लोमभ्य आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये । तं न पश्यन्ति । अकृत्स्नो हि सः । प्राणन्नेव प्राणो नाम भवति । वदन् वाक् । पश्यंश्चक्षुः । शृण्वन् श्रोत्रम् । मन्वानो मनः । तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेद ॥ अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येते सर्वे एकं भवन्ति । तदेतत् पदनीयमस्य सर्वस्य, यदयमात्मा । अनेन ह्येतत् सर्वं वेद "—इति ॥

यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानु विलीयेत, न हास्योद्ग्रहणायेव स्यात् । यतो यतस्त्वाददीत—लवणमेव । एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन [illegible] । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति ॥ यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव । एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥ यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति पश्यति शृणोत्यभिवदति, मनुते विजानाति वा । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं जिघ्रेत् पश्येच्छृणुयादभिवदेन्मन्वीत विजानीयात् । येनेदं सर्वं विजानाति तं केन विजानीयात्, विज्ञातारमरे केन विजानीयात् ॥ स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते, असङ्गो न हि सज्यते, असितो न व्यथते न रिष्यति । एतावदरे खल्वमृतत्वम् "—इति ॥ ( बृहदा० २ । ४ ) ( ४ । ५ ) ( शत० १४ । ५ । ४ ( १४।७।३ ) ॥

तथा चायं सर्वेन्द्रियेष्वनुस्यूतः सर्वेन्द्रियाभिमानी कृत्स्नशरीरेऽभिव्याप्तः प्रज्ञानघनो विज्ञानघनः कश्चिदर्थो जीवात्मेति सिद्धम् ॥ ४ ॥

अत्रेदमाशङ्क्यते । जीवशरीरे तावदस्त्येव वैश्वानरः, अन्नसंज्ञे वैश्वानर-तैजसौ, सर्वसंज्ञे वैश्वानरतैजसप्राज्ञा—इत्येवं त्रिविधः खलु भूतात्मा भवति । तत्र वैश्वानरोऽग्निः शरीरस्थसर्वविधभूतधातुजनकः । तैजसो वायुः शरीरगत-सर्वविधचेष्टाजनकः । प्राज्ञस्त्विन्द्रः शरीरगतसर्वविधज्ञानजनकः । एत एव त्रयोऽस्य शरीरस्याधिष्ठातारस्तन्त्रनिर्वाहकाः प्रतिपद्यन्ते । ज्ञानक्रियार्थसमुच्चय-स्यैव शरीरतया तेषां त्रयाणामेतत्त्रयाधीनत्वात् । नातोऽन्यः कश्चिदर्थो प्रत्यक्षमिह दृश्यते । तस्मादग्निवाय्विन्द्रा एव संहिता एको जीवात्मेति वक्तव्यम् । यस्तु खलु —" येनेक्षते पश्यतीत्यादिना तलवकारोपनिषदि, " यत्रैतदाकाशमनु विषण्णं चक्षुरित्यादिना छान्दोग्योपनिषदि च सर्वेन्द्रियानुस्यूतत्वेन नायमेक आत्मा व्याख्यातः, सोऽप्यग्निवाय्विन्द्रैस्त्रिभिरिन्द्र एव प्रतिपत्तुं युज्यते । " इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वेति ( ५। २। ९३ ) पाणिन्युक्तेरिन्द्रसंबन्धेनैवेन्द्रियाणामिन्द्रियत्वोपपत्तेः सर्वेन्द्रियनाथायं मुख्यप्राण उच्यते। " न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते, प्राणा इत्येवाचक्षते । प्राणो ह्येवैतानि सर्वाणि भवन्ति ( ५। १ )

पुरस्तात् प्राति एतद्वृक्षोत्थानसौ भवति'—( ४ । ३ ) इत्येवं संपरिष्वक्तशब्देन भेदाख्यानात् ॥ एवं स्थिते प्रज्ञानघनविज्ञानघनयोर्जाबालश्रुतौ कौषीतकिश्रुतौ वा यदिदमभेदाख्यानं तत् प्रज्ञाने विज्ञानस्यानुस्यूतत्वादयस्कृत्यादौपचारिकं द्रष्टव्यम् ॥ ३ ॥ एवमपि चक्षुरादीन्द्रियाणामन्दतानां प्रतिनियतविषयग्राहित्वादिन्द्रियाणामन्योन्यभिन्नत्वेऽपि प्राणप्रज्ञाप्राणचेतनानामैक्यमेतयैव सर्वेन्द्रियेष्वनुस्यूततयाऽध्यवसीयते । तेन सर्वेन्द्रियोऽप्येक एवात्मा श्रुत्या व्याख्यायते ॥ ४ ॥

स चायमेक आत्मा इन्द्रो वामदेव्यो चेति चिन्तायामुच्यते । देवतारूपाणामेषां प्राणानां मध्यवर्तिनि मुख्यप्राणे इन्द्रशब्दः । "स योऽयं मध्ये प्राणः —एष एवेन्द्रः" ( ६ । १ ) इति शतपथश्रुतेः । स चेन्द्रो दिव्यप्राणः प्रवृत्तं मानवशरीरं द्वेधाऽभिनिविशते । मनसाऽनुगृहीतश्चेतनयाऽनुगृहीतश्च ॥ यद्यपीन्द्रः क्रियोत्तररूपश्चायं सौरप्राणः स्वतो यद्यप्यचेतन एवेष्यते तथापि चेतनानुगृहीतः—ब्रह्मणस्पतिरसरूपेण मनसा चेतनया चाभिव्याप्तो द्वेधा ज्ञानमयं रूपं लभते । प्रज्ञानं च विज्ञानं च । उभयोरप्यनयोश्चेतनामनसोर्ज्ञानेन्द्रत्वाविशेषेऽपि सूर्यरसस्यैन्द्रस्य चेतनामात्रयोगे विज्ञानत्वं, चेतनामनसोर्योगे प्रज्ञानत्वमित्येव भवति ज्ञानद्वयद्वैतात्म्यम् । उभयथापि ज्ञानमयो भवत्येवैक आत्मा—विज्ञानात्मा च प्रज्ञानात्मा च । सो वैज्ञानात्मा सुषुम्णैव नाड्या वयमिमां पृथ्वीमनुसंक्रामतस्तथाप्यत्र विज्ञानात्मा तावद् गायत्र्या प्रणाल्या ब्राह्मणविज्ञानं सावित्र्या प्रणाल्या क्षत्रियविज्ञानं सरस्वत्या प्रणाल्या वैश्यविज्ञानं शनिस्थवायुसंक्रान्तया तामस्या प्रणाल्या शौद्रं विज्ञानं भूत्वा इन्द्रयोनिसंज्ञकब्रह्मरन्ध्रद्वारा प्राणिशरीरमनुप्रविशति । प्रज्ञानात्मा तु भूगर्भं प्रविष्टः पृथ्वीरसो भूत्वा प्रपदद्वारा प्राणिशरीरमनुप्रविशति । उभयोर्हिरण्मयपुरुषत्वाविशेषेऽपि विज्ञानात्मनो हिरण्यरेतोमयत्वाद्धिरण्मयत्वमिष्यते । प्रज्ञानात्मनस्तु रसमयत्वाद्धिरण्मयत्वमैतरेयश्रुतौ व्याख्यातम् ॥ सनायं विज्ञानात्मा सर्वेन्द्रियाधिष्ठातरि शरीरप्रतिनिधारकेऽस्मिन् प्रज्ञानात्मनि संश्लिष्यत एव रूपं धत्ते । तमेवैतं चिदाभास इत्याचक्षते । तथा च यथास्मिन् शरीरे भूतजनको वैश्वानरोऽग्निरेको भूतात्मा, यथा वा चेष्टाजनकस्तैजसो वायुरेको भूतात्मा, तथैवायं सर्वविधज्ञानजनको विज्ञानात्मनाऽनुगृहीतः प्राज्ञो नामेन्द्र एको भूतात्मा इति शक्यं वक्तुम् । एवमप्यस्य जडस्येन्द्रस्य चेतनानुग्रहणादेव ज्ञानमयात्मत्वमुपपद्यते न स्वरूपेणेति कृत्वा चेतना ब्रह्मण एवैतद्विजयेऽपि साध्यैन्द्राणां देवानां विजयो महिमा व्याख्यायते । मनसोऽनुग्रहणेऽपि चेतनाया एवानुग्रहो निष्पद्यते । चेतनाक्रान्तस्य सोमस्य ज्ञानानुग्राहकत्वात् । ज्ञानेन चानुगृहीत एव प्राणः सृष्ट्यै स्थित्यै संहाराय च प्रभवतीति अग्निवायविन्द्रातिरिक्तस्य चेतना ब्रह्मण एवात्मत्वं निष्पद्यते । इन्द्रियाणां मुख्यप्राण आत्मा । तस्य प्रज्ञानमात्मा । तस्य विज्ञानमात्मा । तस्यापि चिद्घनोऽयमात्मा । तथा चान्ततश्चिद्घन एवायं सर्वेषामात्मेति विद्यात् । चिदाभासः शरीरमभिनिविष्टो जीवात्मेति व्याह्रियत इति सिद्धम् ।

---

## ७–जीवस्वरूप निष्कर्षः ।

केचिद्विदु कुर्वदिहास्ति किञ्चिद्रूपं शरीरे प्रभव स आत्मा ॥
स्थिति-स्वभावं तु यदस्ति रूपं जगत् तदाहुर्ध्रुवमात्मनस्तत् ॥ २९ ॥
वयं तु विद्मो नहि तिष्ठदेतत् क्वचास्ति कुर्वत्तु समस्तमेतत् ॥
उल्लोलवत् सर्वमिदं समन्तादनुक्षणान्यान्यतया विभाति ॥ ३० ॥
कुर्वंस्तु नित्यं परिवर्तमानेष्वसत्स्वकर्म ध्रुवमस्ति किञ्चित् ।
अन्तर्निगूढं सदनंतशान्तं विज्ञानमानन्दमहं स आत्मा ॥ ३१ ॥

## ८–त्रिपुटीसंप्रत्ययैकत्वाद् ज्ञातृवद् ज्ञेयजगत्सिद्धिः ॥ १ ॥

१ एकोऽहमस्मीति यदस्ति भान प्रत्येमि मां वेत्तृतया तत्तद्वत् ।
निश्चिन्व वेद्यानि च नूनमेतत्संप्रत्ययाद्वन ध्रुवाणि नु स्यु ॥ ३२ ॥
वेत्ता च नित्या सह वेद्यवर्गं संप्रत्ययोऽयं त्रिपुटीस्वरूप ।
तत्रैक आत्मैव तु सत्यभूतो मिथ्येतराणीति कथं प्रतीयाम् ॥ ३३ ॥
संप्रत्ययो न विभिन्न - स एको, मिथ्या स चेत्तात्मनि सत्यता स्यात् ।
सत्यः स चेद् वेत्तृवदेव विभिन्नवेद्यानि सत्यान्यपि समयेयु ॥ ३४ ॥

## ९–ज्ञेयत्वसामान्याद् ज्ञातुरिव ज्ञेयजगत्सिद्धिः ॥ २ ॥

२ ज्ञातापि स ज्ञेयतयैव भातो न ज्ञायते यत्र तदस्ति नाम ।
ज्ञेयेष्वहं केवलमस्मि सत्यं मिथ्येतराणीति कथं प्रतीयाम् ॥ ३५ ॥

## १०–संप्रत्ययप्रामाण्याद् ज्ञेयजगत्सिद्धिः ॥ ३ ॥

३ संप्रत्ययो निश्चयस्वरूपः स्वतः प्रमाणं सदबाधितत्वात् ।
प्रमाणसिद्धं सकलं तु वेद्यं न चापलापाय कदापि शक्यम् ॥ ३६ ॥

## ११–जीवानन्त्यसिद्धिः ।

१ वेद्येषु पश्यामि तु मामिवान्यान् मत्तुल्यधर्मव्यवहारभाजः ।
मत्तश्च पार्थक्यममीषु पश्याम्यनेकजीवास्ततः प्रतीये ॥ ३७ ॥
तमोरज सत्वगुणातिरेकात् तज्जन्ममृत्युव्यतिरेकतश्च ।
मन्ये ध्रुवं ज्ञानविभिन्नमूलान्येतान्यनन्तानि वयं भवाम ॥ ३८ ॥
एकैकब्रह्माण्डनियन्तृभूता सूर्या अनन्ता इह सन्ति यद्वत् ।
तत्तद्ब्रह्माण्डनिदानभूता वयं च तद्वद्बहवो विभाम ॥ ३९ ॥
यदेतदानन्त्यमहंपदार्थे नैवाननः प्रात्ययिकं तदस्ति ।
वैतस्य मैत्रस्य परस्य वा स्यात् स प्रथया नो विनिगम्यते तत् ॥ ४० ॥

सत्तात्मकं यज्जगदस्ति तच्च द्विधास्ति यन्मौलिकमेतदेकम् ।
अथापरं माण्डलिकं समन्तात् तन्मौलिकालंबितमस्त्यनन्तम् ॥ ५६ ॥
यद् दृश्यते तत् त्रितयं समुच्चितं निगीर्णभेदं जगदेकतां गतम् ।
मनोमयं प्राणमयं च वाङ्मयं,शास्त्रैकदृष्ट्या तु पृथक्त्वमोद्यते ॥ ५७ ॥
तद्वाङ्मयं क्वापि हितं परोक्षवत् ततः समन्तात् प्रचरन्ति वाङ्मया. ।
प्राणा ऋगाख्याः प्रथिता भवन्ति ते चीभ्रे सदा काच इवाक्षिण विम्बित· ॥ ५८ ।
अक्षिस्थबिम्बेन युतं मनो मे तद्बिम्बरूपे परिणाममेति ।
तद्रूपमद्गणश्चदृश्यमानि स्वे नि ग्राम्यते शीर्षणि सास्य दृष्टि ॥ ५९ ॥
बहिर्जगद् वाङ्मयमेतदित्थं देशे बहिः क्वापिहितं ततोऽभूत् ।
अन्तर्जगन्नाम मनोमयं तच्छीर्षेक्षिदेशस्थमतोऽन्यदेतत् ॥ ६० ॥
बहिर्जगत्त्वेकमिहास्ति वाङ्मयं तदुत्थितं प्राणमयं त्वनेकवत् ।
एकात्मनि त्वेकमिदं मनोमयं ज्ञानप्रभेदात् तदनन्तमिष्यते ॥ ६१ ॥
हस्ती य एको बहिरस्ति देशे तस्मात् समानाकृतय समन्तात् ।
भृत्यभूतंय सूर्यकरप्रसूता असंख्यरूपा अपि हस्तिनः स्यु· ॥ ६२ ॥
यन्मौलिकान्मण्डलिकाः क्रमात्ते चक्षुःस्थले ते प्रतिबिम्बिता स्यु ।
ते वास्तिसिद्धा अथ चक्षुषो ये मस्तिष्कगास्ते त्विह भातिसिद्धाः ॥ ६३ ॥
तदित्थमन्तर्जगदस्ति भिन्नं बहिर्जगद् भिन्नमिति द्विधा तत् ।
बहिर्जगत्तद् यदिहास्ति सिद्धं यद्भातिसिद्धं जगदान्तरं तत् ॥ ६४ ॥

## १५—प्रकारान्तरेण जगद्द्वैविध्यम्

२ अपूर्वरूपप्रतिरूपभेदाद्विकल्पं द्विधान्तर्जगतो बहिस्तत् ।
प्रतीयते चेत् तदपूर्वरूपं पूर्वं बहिस्तत्र न तादृशोऽर्थः ॥ ६५ ॥
बहिर्यथा तद्वदयं पुरोऽन्त. करोति तद्वच्च बहि· करोति ।
तदेतदुक्तं प्रतिरूपशिल्पं ततश्च सिद्धं द्विविधं जगत्तत् ॥ ६६ ॥
बहिर्जगच्च द्विविधं प्रतीम स्वत. स्थितं ओषधिया च हृन्नम् ।
सूर्येन्दुशैलप्रमुखा स्वत स्था गृहाम्बरादि तु कृत्रिमं स्यात् ॥ ६७ ॥

## १६—बहिर्जगत्सिद्धिः ।

१ अहंप्रकाशे यदिमानि कानिचिद् विभान्ति तान्येव जगन्ति मन्महे ।
स्वत पृथक् सन्ति मया प्रकाशितान्यथापि वा सृष्टिरियं मदूर्ध्वपा ॥ ६८ ॥
न संशयोऽत्र नियतां मतिर सा सृष्टि स्थितं विश्वमिदं जगन्मयि ।
न मद्विभिन्नं स्थलमत्र विद्यते यत्र स्थितं विश्वमिदं बहिर्भवेत् ॥ ६९ ॥
अहं हि तस्य प्रभव प्रतिष्ठा परायणं मन्मयमेतदस्ति ।
तथाहमेवं, मयि मय,तदास्म्यहं न मत्तं पृथगस्ति किञ्चित् ॥ ७० ॥

जागर्ति यो यः पृथगस्य चास्य ज्ञानादिदं भाति जगत् पृथक्त्वम् ।
ज्ञानाद्बहिः किन्तु जगच्च किञ्चित् संभावयामीति वदन्ति केचित् ॥ ७१ ॥
अथोच्यते ज्ञानमिदं स्वतन्त्रं न दृश्यते तत्र यथेच्छकारि ।
स्वतःस्थितं वस्त्वनपेक्ष्य किञ्चिन्न जायते ज्ञानमिदं कदाचित् ॥ ७२ ॥
समुद्रशैलाद्यपि यत्पुरस्तात् साक्षात् बहवो वदन्ति ।
स्वाक्षाद्यतोऽन्यान्यपि गाहमानो न ज्ञो ग्रामसर्वमिह प्रयामि ॥ ७३ ॥
न केवलं पश्यति नित्यमिष्टं सर्वत्र जीवो निजदेहमात्रम् ।
भूयांस्यनिष्टान्यपि पश्यतीति मन्येमि मूलं पृथगस्ति किञ्चित् ॥ ७४ ॥
यत् किञ्च पश्यामि घटं पटं वा मदाश्रयं ज्ञान्यहमेव तानि ।
किन्तु ध्रुवं तत् परिकल्पकानि मन्येव वस्तूनि बहिः स्थितानि ॥ ७५ ॥
चक्षुः प्राप्यकारीणि यदीन्द्रियाणि तदेन्द्रिये गोचरे बहिः स्युः ।
अप्राप्यकारीणि यदा तदापीन्द्रिये स्वगुणानन्तरबहिर्वा ॥ ७६ ॥
अस्तीति तद् वेद्मि महीन्द्रियं यं वेद्मीत्यतोऽस्तीति न साधु मन्ये ।
तस्मात् परोक्षं ध्रुवमस्ति मूलं ज्ञाने स्वतन्त्रं हि बहिर्जगत्तत् ॥ ७७ ॥
यादृग् यथा यत्र यदस्ति तादृक् संदृश्यते, नायमहं भणामि ।
यथा गतामीदमहं तथा मे ज्ञानं भवेदत्र हताशितो मे ॥ ७८ ॥
अहं च पुत्रश्च पिता च मित्रं शत्रुश्च मे भिन्नतयाऽवभान्ति ।
केचिन्मृताः कश्चिदयो मरिष्यत्यथापि विश्वं न कदापि नश्येत् ॥ ७९ ॥
एकस्य मृत्यावथवा विमोक्षे तज्ज्ञाननाशेऽपि न विश्वनाशः ।
चैत्रे मृते मैत्रजगन्न नष्टं मृतेऽपि मैत्रे न जगद्विनश्येत् ॥ ८० ॥
त्वस्मिन् मम भक्ष्यमेति विश्वं नाहं प्रभुत्वं च मूर्च्छितस्य ।
विश्वं तथाप्यस्ति परं प्रभुनेष्यसि मम भाति यथा तथैव ॥ ८१ ॥
सामान्यतो ज्ञानमिदं यदित्थं तद्धि प्रमाणं न हि बाधमीक्षे ।
तज्जीवसम्भिन्न जगद्विभिन्नं स्वतन्त्रमेकं जगदस्ति किञ्चित् ॥ ८२ ॥

## १७—अन्तर्जगत्सिद्धिः ।

१ बहिर्जगत्येव तदास्तु मास्तु स्वतोऽसदन्तर्जगदत्र किञ्चित् ।
इति प्रपद्येत यदीह कश्चित् तस्मै ब्रुवेऽन्तर्जगतोऽपि सिद्धिम् ॥ ८३ ॥
ज्ञानोपपन्नं तु जगद् यथान्यत् सत्त्वोपपन्नं च जगत् तथान्यत् ।
ज्ञानाश्रया इह जीवनिष्ठाः सत्ताश्रयास्तु तथा बहिःस्थाः ॥ ८४ ॥
स्पृष्ट्वा पदार्थं प्रतिपद्यतेऽयं ज्ञानीयभागाश्रयवास्तु तत्र ।
स्पर्शक्रमेण भ्रमन्ति भाने तद्वदन्येष्वपि युक्तिसाम्यात् ॥ ८५ ॥
भूतं भविष्यन्तमथासदर्थं श्रुत्वा तथा व्यक्तिविशेषरूपम् ।
ज्ञानीयमन्तर्जगदेव पश्येद्बहिर्जगत् पश्यति नैव तर्हि ॥ ८६ ॥
आकुञ्चिता चञ्चललोचनाभ्यां द्विधा स्वं पश्यति द्वयमेकम् ।
स्रग्जं भुजं तद्वदुभयं हि रूपं बहिर्जगत्त्वं कथयेत्तयोः कः ॥ ८७ ॥

## १८—अन्तर्बहिर्जगद्भ्यां ज्ञानोपपादनम् ।

## तत्र बाह्यार्थभागान्वितप्रत्ययमतम् ।

१ तदित्थमन्तर्जगदेव सर्वं पश्यामि किन्त्वस्ति बहिर्जगच्च ।
बहिर्जगच्चेन्न भवेत् तदानीं ज्ञानोपपत्तिर्न भवेत् कदाचित् ॥ ८८ ॥
अनन्तशक्त्यैकघनोऽस्म्यहं यस्तस्योद्गमा सन्ति विकाशमात्रा ।
या शक्तयः काश्चिदवैमि तानीन्द्रियाणि तान्यस्म्यहमेक आत्मा ॥ ८९ ॥
अर्थेन्द्रिये यातसदर्थयोगे द्वयोरुपाश्रय तयोः स्वमंशम् ।
तयोर्विकारेण भवत्यपूर्वः स प्रत्ययो रूपरसादिसंज्ञः ॥ ९० ॥
तैलस्य दोषात्तु यथा प्रदीपज्योतिः क्वचास्फीतमभास्वरं स्यात् ।
बाह्यार्थदोषान्मलिनं तथैवाज्ञानं भ्रमः संशय आविरस्ति ॥ ९१ ॥
बहिः स्थितोऽर्थोऽन्वयमेति बुद्धौ विभाति तस्माद्बहिरेव सोऽर्थः ।
एकान्ततो मत्कृत एव चेत् स्यान्नाज्ञा प्रतीयेत तदा बहिर्वा ॥ ९२ ॥

## १९—बाह्यार्थवातजप्रत्ययमतम् ।

२ इत्येक आहुः पर आहुरंशद्वयं मिथोऽन्वेति न भातिसिद्ध्यै ।
स्यादन्यथा दृष्टपरं परायां सर्वाद्यनाशादिदमर्थनाशा ॥ ९३ ॥
तस्मात् करोति ध्रुवमिन्द्रियेऽस्मिन्नाघातमेवैष बहिः स्थितोऽर्थः ।
आहन्यमानेन्द्रियमेव शुद्धं यद्रूपमायाति विभाति तन्मे ॥ ९४ ॥
तेनेन्द्रियाणां परिणामरूपास्ते प्रत्यया आभविकारभूता ।
बहिर्भ्रमेतेषु विभाति यत्तन्मन्ये स्वभावात् कृतमिन्द्रियाणाम् ॥ ९५ ॥
यत्तु भ्रमोऽज्ञायत संशयो वा न तत्र हेतुर्बहिरर्थयोगः ।
आघातवैरस्यवशात्तु तत्रेन्द्रिये विचित्रः परिणाम एव ॥ ९६ ॥
अस्मिन्मते यद्यपि कश्चिदंशो न भवत्यर्थस्य बहिः सतोऽस्ति ।
तथापि तादृक्परिणाममूलाघातात्प्रकल्प्या बहिरर्थसत्ता ॥ ९७ ॥

## २०—ज्ञानोत्पत्तौ बाह्यार्थस्य हेतुत्वम् ।

३ अयं ततोऽन्तर्जगदस्ति किञ्चित् पृथक् पृथक् चास्ति बहिर्जगत्तत् ।
ताभ्यामुभाभ्यां प्रतिपत्तिसिद्धिः संभाव्यते नैरन्तरेण मन्ये ॥ ९८ ॥
तथा च मज्ज्ञानरूपाणि यानि क्वचिद्बहिर्वा स्थितिमन्ति सन्ति ।
अदृश्यरूपाण्यपि तानि मन्ये परं जगच्चान्तर्जगतो विभिन्नम् ॥ ९९ ॥
बहिर्न यद्यस्ति घटो न तर्ह्यज्ञानोऽपि मे तद्विषयातिबुद्धिरस्ति ।
बहिः स्थितेऽस्मिन् घटबुद्धिरन्यमतेर्न सर्वत्र घटस्य साम्यात् ॥ १०० ॥
किन्तु अयं तेन घटं बहिर्यो स्थितं प्रपश्यामि परोऽपि कश्चित् ।
तथा मसंयोगरतं मदात्मलग्नं नु पश्यामि तदात्मगं तम् ॥ १०१ ॥

## २१—बाह्यार्थस्पर्शानुसारादात्मनि संस्कारः ।

४ बहिः स्वतन्त्राणि जगन्ति यावन्त्याभान्त्यहं ध्यानधरातलेऽस्मिन् ।
तावन्ति मे भान्ति मयि स्थितत्वात् भान्ति तु ध्यानतलाच्च्युतानि ॥ १०२ ॥
ध्यानस्य यावत्तमिदं प्रदेशं वस्तु स्पृशेत् तत्र च लक्ष्म तादृक् ।
प्रजायतेऽन्तर्जगदात्मनाऽसौ संस्कार उक्तः स्मरणाय हेतुः ॥ १०३ ॥
स्पर्शोऽधिकश्चेदधिकोऽस्य बोधो मन्दे तु मन्दोऽथ समे समः स्यात् ।
सम् स्पर्शवैशेष्यवशेन वस्तुज्ञाने विशेषो भवतीति मन्ये ॥ १०४ ॥
न स्पर्शयोग्योऽस्म्यहमित्यमाहुः केचित्तदज्ञानवशाद्वचस्तम् ।
बाह्यार्थसंस्पर्शाहितसंस्क्रियाऽस्मिन् प्रत्यक्षमीक्षे मयि शिक्षयापि ॥ १०५ ॥
निर्लेप आत्मा न च सज्ज्यतेऽसौ न बध्यतेऽसौ व्यथते च नासौ ।
इत्याहुरन्ये भ्रममेतदेवं तथापि नात्मनि नो विशेषः ॥ १०६ ॥
वायोर्जलस्यापि मिथः प्रसङ्गे फेनोद्गमः स्यादथवापि कम्पात् ।
नायं तथा वस्तुनि सज्जतेऽस्मिन् न बध्यते न व्यथते कदाचित् ॥ १०७ ॥
आहन्ति वायुर्जलमस्ति तस्माज्जले तरङ्गः कम्पमपीह कार्यम् ।
न सज्जते तत्र जडे तु वायौ विचारयात्मानमिमं पृथग्वत् ॥ १०८ ॥

## २२—आत्मनि बाह्यार्थस्पर्शतारतम्यम् ।

५ पुनश्च बहिःप्रसरत्स्वदेशव्याप्त्या बहिर्वस्तु न विद्धमितश्चयात् ।
प्रतीयमाने बहिरर्थपूर्वकं ज्ञानं तदज्ञानकृतं भ्रमं स्यात् ॥ १०९ ॥
इन्द्रोऽयमात्मेन्द्रियवर्गमार्गैर्बाह्यार्थवर्गं स्पृशतीति मनीषात् ।
नास्ति स्वतन्त्रो बहिरर्थयोगे तस्माद्विपूर्णः इहास्ति जीवः ॥ ११० ॥
स्वल्पांशतोऽथ प्रमितं प्रगृह्णन् सोऽज्ञानभूयिष्ठतया निवेत्ति ।
संभाव्यतेऽस्मिन् क्रमशश्च बोधात् पूर्णज्ञतासंयमयोगतो वा ॥ १११ ॥
बाह्यांस्तु कामांस्तिरयन् यदान्तर्मुखो भवामि स्वयमात्मकामः ।
सर्वज्ञतां यामि स सर्वकामः स्पृशन्नशेषान् मम शक्तिकामान् ॥ ११२ ॥
"पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ ११३ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ ११४ ॥"

कठोपनिषत् ४ वल्ली ।

# अथेश्वरजगत्संशयवादप्रतिवाद-श्चतुर्थः खण्ड आरभ्यते

## १—अनन्त जीवाधारतयेश्वरसिद्धिः ।

जीवा अहंप्रत्ययमात्ररूपा स प्रत्ययः सर्वजगत्स्वरूपः ।
पश्यामि यत्तज्जगदात्मभेदात् तद् द्रष्टृधा दर्शनमेव वाऽहम् ॥ ११५ ॥
यथाहमेकोऽस्म्यवबोधरूपः पश्यामि लोकानखिलान् यथाहम् ।
ध्रुवं तथैतेऽप्यवबोधरूपा मां चेतरांश्चानुभवन्ति मन्ये ॥ ११६ ॥
पश्यामि यद्यन्मयि तद् समस्तं मत्तः परं नेति न तत् परस्मिन् ।
जगद्धरा इत्थमनन्तजीवा यस्मिन्प्रतिष्ठा पर ईश्वरः सः ॥ ११७ ॥
नश्यन्ति जीवा प्रभवन्ति जीवा यत्रापि यान्ति प्रभवन्ति यस्मात् ।
तद्धाम किञ्चिद् ध्रुवमस्ति जीवास्तदाश्रया सन्ति स हीश्वरोऽस्ति ॥ ११८ ॥

## २—बहिर्जगदाधारतयेश्वरसिद्धिः ।

बहिर्निराधारमिदं जगद्वा साधारमेवं वेति विचारणीयम् ।
वीक्षे निराधारमिदं न किञ्चिन्मज्ज्ञानसाधारकमेव सर्वम् ॥ ११९ ॥
जगत्त्वसाधर्म्यवशाद्बहिर्योऽप्याधारमाद्यस्य स्वमस्य मन्ये ।
अन्तर्जगत्तद् ध्रुवमस्य न स्याज्ज्ञानादृते काप्यपरा प्रतिष्ठा ॥ १२० ॥
अन्तर्जगज्ज्ञानत एव भूत्वा तत्र प्रतिष्ठाय लिनाति तस्मिन् ।
बाह्यस्य चैवं प्रभवः प्रतिष्ठा गतिर्भवेज्ज्ञान विशेष एव ॥ १२१ ॥
ज्ञानं निराधारमिदं यथा स्वे महिम्नि तिष्ठत्यपरत्र नास्ति ।
तथा जगद्बाह्यमिदं स्थितं स्वे महिम्नि न स्वीक्रियते कुतो वा ॥ १२२ ॥
ज्ञानं यथास्माकमुदेत्यकस्मात् स्थित्वा क्वचित् प्रच्यवतेऽप्यकस्मात् ।
बहिर्जगच्च प्रभवं प्रतिष्ठा परायणं तद्वदिदं न दध्यात् ॥ १२३ ॥
अत्रोच्यते संभवतीदमेवं किन्त्वेतदन्तर्जगदस्ति सर्वम् ।
मज्ज्ञानगं तस्य बहिर्न सत्ता ज्ञानं विना नास्ति जगत् स्वतन्त्रम् ॥ १२४ ॥
ज्ञानं निराधारमिदं यथा मे तथा निराधारमिदं बहिः स्यात् ।
इत्थं जगत् कल्पयितुं न शक्यं वैधर्म्यतो ज्ञानतदर्थपदत्वयो ॥ १२५ ॥
ज्ञानं निराधारमिदं समीक्षे तस्मिन् स्वनाधारकमेव चार्थम् ।
बहिर्जगद्यत्समवैत तत्तज्ज्ञाने स्वाधारमिव ध्रुवं स्यात् ॥ १२६ ॥
यथा त्विमे ज्ञानजगत्पदार्था जीवात्मसत्ता प्रतिभान्ति तद्वत् ।
ध्रुवं समस्तेश्वरमात्मसत्ता अमी पदार्था स्वयमाभवेयु ॥ १२७ ॥
रामानुज स्वप्नमयीं नु सृष्टिं पश्यामि मायामयमात्मनीयाम् ।
भ्रान्तं तदेवा विद जीवमायान्तस्थेष मर्मं यतात्मनिष्ठा ॥ १२८ ॥

देहस्य यावस्य निमित्तशरीरेण व्यवस्थास्ति न चास्ति वान्यः ।
तामीश्वरीं सृष्टिमिह प्रतीमो जैव्यां बहिर्मानवदाद् व्यवस्था ॥ १२९ ॥
यत्रात्मतत्त्वास्त इमे पदार्था यहि स्थिता सन्ति यदात्मनिष्ठाः ।
सर्वो समूलं परमात्मसंस्थं विश्वस्य विद्म परमेश्वरं तम् ॥ १३० ॥
सजीवनिर्ज्ञानविभिन्नमूलो जगत्प्रवाहोऽयमनाद्यनन्त ।
यज्ज्ञानमूलस्तदिदं समस्तज्ञानाकरज्ञानमिहेश्वरोऽस्ति ॥ १३१ ॥
बहिर्जगद्योनिरयं तदित्थ सर्वेश्वरो नाभ्युपगम्यते चेत् ।
मज्ज्ञानमात्रेण यथेन्द्रसृष्टा सर्वत्र सर्वार्थविचारा भवेयु ॥ १३२ ॥
तस्मात् स्वतन्त्रं पृथगस्त्यनन्तं विज्ञानमेकं तदधीनमेतत् ।
स्वतन्त्रमाद्यन्तविहीनमेकं प्रवर्तने विश्वमिदं बहिर्था ॥ १३३ ॥
सत्तोपलब्ध्यव्यतिरेकहेतोरनेन विज्ञानमिदं जगत् स्यात् ।
तदेव मन्ये भगवाननन्त विश्वमूर्तिर्जगदीश्वर स्यात् ॥ १३४ ॥
अशेषशक्त्यर्थघन प्रशान्त सत्तावनश्चित् घन एव तस्मात् ।
एकोऽविनाशी प्रतिपद्यतेऽर्थो विश्वाश्रयो विश्वमय स आत्मा ॥ १३५ ॥
विश्वस्य सोऽयं प्रभव प्रतिष्ठा परायणं तन्मयमेतदस्ति ।
जगत्त्वयं, तत, जगज्जगत्तत, जगत तस्मात् पृथगस्ति किञ्चित् ॥ १३६ ॥

## ३—ईश्वरीयपरिचयः ।

स ईश्वरो न प्रतिपद्यते चेत् तत्पादुदारोहणमत्र कोऽस्मा ।
प्रदाह शक्ति श्रुचिरूपमेतान्याय यत्तस्मादचिरेण कस्मात् ॥ १३७ ॥
पश्यामि यावत् खमिदं भवनाक्रान्तं ततोऽप्यूर्ध्वमत्र समन्तात् ।
लोका अनन्ता अपि सन्ति होत्थ सामान्यतो ज्ञानमिहेश्वरं स्यात् ॥ १३८ ॥
ग्रहा क्रमन्ते न चलन्ति तारा स्थाने शरीराश्रयता भवन्ति ।
तेजांसि यान्यूर्ध्वमत्र पयांसि यत्तेषु सत्यं भुवमीश्वर स ॥ १३९ ॥
जागर्ति जीवो मुहुरीहतेऽसौ माणा भ्रमन्ते मनसा नियुक्ता ।
तस्मिन् सुषुप्ते यतो नियोगाच्चेष्टा स्युरंश स इहेश्वर स्यात् ॥ १४० ॥
सर्वेऽपि जीवास्तृपिना पयोऽनु स्वन प्रधावन्ति तृणानि हृष्टे ।
पयस्तृषां नाशयतीति सत्र जानन्ति तज्ज्ञानमिहेश्वरं स्यात् ॥ १४१ ॥
यथेत्र गङ्गा च हिमालय च प्राज्ञोऽविदिंस्तत्र तु वेद्मि चाहम् ।
परे च तत्रैव वदन्ति तस्मात् तदीश्वरज्ञाननिरञ्जनं स्यात् ॥ १४२ ॥
यदैन्द्रिय ज्ञानमिहास्ति नस्तद् व्यक्त व्यक्तज्ञानविभिन्नरूपम् ।
भिन्नार्थमप्यर्थमभिन्नतद् यद् धत्त विभुमानहृत तदस्यम् ॥ १४३ ॥
चिता चिदाभास उपेत्यभेद परेश्वरज्ञानमथाथ तेऽर्था ।
ज्ञानादभिन्ना प्रतिभान्ति तस्मादर्था पृथक्त्व न मिथोऽस्ति गुहाय ॥ १४४ ॥
घटं प्रपश्यामि घटेऽत्र रूपं रूपाश्रया येऽपि निरूढधर्मा ।
अस्तित्वमि येन घटं वदामि तदीश्वरं ज्ञानमिति प्रपद्ये ॥ १४५ ॥

तत्रास्ति बुद्धिर्हि घटोपलब्धेर्न भिद्यते रूपमिमे च धर्मा. ।
मज्ञानग्राह्या अपि सन्ति नित्या मनेन्द्रियं यद्ग्रहणं करोति ॥ १४६ ॥
तत्रैव रूपाण्यपि तांश्च धर्मांस्तेषाममीषामपि चोपलब्धीः ।
एकं महाज्ञानमहं वदामि स ईश्वरः शाश्वतिकोऽद्वितीयः ॥ १४७ ॥

## ४–प्रश्नोद्धारसूत्रम् ।

प्रश्नांस्तु यान् सृष्टिविधायकुर्वंस्तत्संभवः स्याद् यदि विश्वकर्ता ।
मनुष्यवद् विग्रहवान् मितः स्याद् यथाल्पशक्तिः प्रयतेत सृष्ट्यै ॥ १४८ ॥
विज्ञानमेवेश्वर इष्यते विभुर्नासौ जडो जाड्यहरस्वभावतः ।
यथा प्रकाशस्तपनः प्रकाशवानप्यस्त्यभेदादिव धर्मधर्मिणोः ॥ १४९ ॥
आनन्दविज्ञानतदस्तिताश्चेत्येते त्रयोर्थाः सहिताः स आत्मा ।
अत्यर्थवैशिष्ट्यममुष्य तस्मात् संभाव्यते सच्चिदयं प्रसन्नः ॥ १५० ॥
जडोऽस्तु वा, नाऽस्ति तथापि हानिः, स एक आत्मास्ति, यदस्ति किञ्चित् ।
स चेतनः सोऽस्ति जडः स शुक्लः कृष्णो महानप्यणुरेव एव ॥ १५१ ॥
अस्तीह सृष्टिर्न तु वास्ति सृष्टिर्यदेतदेवं जगदस्ति किञ्चित् ।
स एष आत्मा स विवर्तमानोऽप्यनश्वरस्तेन स ईश्वरोऽस्ति ॥ १५२ ॥
अनाप्तकामस्य तदर्थमिच्छा प्रजायते नायमनाप्तकामः ।
इच्छानिवृत्तिश्च तदर्थसिद्धौ सिद्धार्थ आत्मा तु किमर्थमिच्छेत् ॥ १५३ ॥
यस्त्वल्पशक्तिः स हि शक्त्यभावादनाप्तकामः स हि जीव इच्छेत् ।
यतेत चायं कृतकृत्यतायां काले सुखं विन्दति नैषमीशः ॥ १५४ ॥
स आप्तकामः स हि सर्वकामोऽप्यकाम एव प्रतिपद्यतेऽर्थः ।
सिद्धो हि काम्यः सकलोऽस्य सोऽर्थो नायं ततः कामयते तदर्थम् ॥ १५५ ॥
यं त्वर्थमुद्दी प्रतिपादयामः कामं तदर्थानुगमः स भाक्तः ।
या काचिदीहा क्वचिदस्ति सा हि प्राणाश्रया सोऽपि मनोऽन्यपेक्षः ॥ १५६ ॥
वृक्षाङ्कुरे याति यदूर्ध्वमेषोऽप्यापो तथा कामयते स कामः ।
तदर्थसांमुख्यमथ प्रवृत्तिश्चेष्टेत्यमन्यार्थमयं क्रमोऽस्ति ॥ १५७ ॥

## ५–असमाधेयप्रश्नोत्तरसूत्रम् ।

१ अथासमाधेयतया तु केचित् प्रश्नाः कृतास्तत्र समाधयः प्राक् ।
शारीरयज्ञानुविधिप्रभेदाद् याज्ञिको गोपथके च दृष्टाः ॥ १ ॥
ते गोपथब्राह्मणके तृतीयप्रपाठके पञ्चमतो निरुक्ताः । ( ३ । ५ । ६ )
एकादशे शतपथे द्वितीयप्रपाठके ब्राह्मणेऽपि प्रोक्ताः । ( ११ । २ । ७ )
स्वैरायनेनाथ्यमतीशिलाऽस्य प्रश्नप्रपञ्चस्य कृतः समाप्तिः ।
यथानुगं सोऽस्ति स पट्विंशविंशेष इत्यमृतं त्वद्वामि ॥ २ ॥

# अथ साधर्म्यवैधर्म्यवादः ।

## ६—जीवेश्वरयोः समूलत्वनिर्मूलत्वाभ्यां भेदः १

१ आत्मा द्विधा व्यष्टिसमष्टिभेदाद् या व्यष्टयस्ता इह जीवशब्दाः ।
ते सन्ति सर्वे प्रतिबिम्बभूता मूलं यदेषामयमीश्वरोऽस्ति ॥ १५८ ॥

## ७—अहं-शब्दो-शब्दाभ्यां व्यपदेशभेदः २

२ ज्ञानस्य तस्येश्वरनाम्न एकस्यो शब्दतोऽस्ति व्यपदेश एवम् ।
ज्ञानानि यानि त्वथ जीवनामान्यहंपदेन व्यपदेश एषाम् ॥ १५९ ।

## ८—क्षुद्र शरीराभिमानित्व-विश्वशरीराभिमानित्वाभ्यां भेदः ३

प्रत्यक्षमीदृग् सकलं शरीरं तदन्तरे कारणमस्य गूढम् ।
आत्मा हि स क्षुद्रतनौ स जीवः स ईश्वरो विश्वतनौ स एकः ॥ १६० ॥

## ९—चतुःकोशत्वनिष्कोशत्वाभ्यां भेदः ४ ।

४ ज्ञानस्वरूपे जगतः प्रकृती स ईश्वरो जीवगणश्च तुल्यौ ।
स्थितौ तु कोशाश्रयणेऽस्त्यपेक्षापेक्षाकृतो नाम तयोर्विशेषः ॥ १६१ ॥
यद्वीन्द्रियं तत्र गतार्थमात्रा मनस्तदन्तश्च तदन्तरे धीः ।
तदन्तरेऽहं विहरामि सोऽयं नित्यं चतुष्कोशगतोऽहमर्थः ॥ १६२ ॥
सर्वार्थमात्रा मयि संनिविष्टा हेत्वपाधिका वास्त्यणुबीजरूपाः ।
न यस्य मात्रास्ति न तस्य बोधो दोषात् क्षयेऽप्यस्मृतिरप्रपत्तिः ॥ १६३ ॥
प्रज्ञा मनोऽर्थेन्द्रियवर्गकोशाः परस्परेणाव्यतिरिक्तरूपाः ।
एकोदयेऽन्येऽपि भवन्ति नाके कस्याप्यपाये सकला अपेयुः ॥ १६४ ॥
नामा पशूनामिति केचिदाहुर्न तत्र बुद्धिर्न मनोऽन्य आहुः ।
एतत्प्रितान्तं क्रममाश्रमेषामपेक्ष्याऽस्त्यनवद्यमस्ति ॥ १६५ ॥
अथेश्वरः कोशमपेक्षते न तं सोऽनन्तमात्रो न परैर्नियम्यते ।
न तत्र बुद्धिर्न मनो न चेन्द्रियं स्वस्य पर्यार्थचयं स्वरूपम् ॥ १६६ ॥

## कादाचित्कज्ञानत्व-नित्यज्ञानत्वाभ्यां भेदः ५ ।

५ ज्ञानं [illegible] योऽस्त्यनुभवो विशेषोऽप्यदं गतं तत्र नश्वरं स्यात् ।
नायंमहत्याकृतिरेकतोऽस्मिन मात्रयैवौ महतत्त्वं पूर्णं ॥ १६७ ॥

## ११—विनाशित्वाविनाशित्वाभ्यां भेदः ६ ।

६ अर्थाः स्वभावात् परिवर्त्य रूपारूपान्ययातो व्ययमन्ति जीवाः ।
जीवास्तु इत्थं क्षयिणोऽप्यनन्ता य ईश्वरः सत्त्वनिनश्वरः स्यात् ॥ १६८ ॥

## १२—अनुकथ्यत्वेश्वरजन्योक्थ्यत्वाभ्यां भेदः ७ ।

७ अस्त स्यमुक्थ्यं परित समन्तादर्यैदवन्येस्य निकरवरोऽर्कः ।
अशीतिरर्कोऽस्ति तदग्रमूता मिथुस्स्वरूपोऽस्ति तत स जीवः ॥ १६९ ॥
प्रकाशनाभौ हृदिग्र्यविम्बो भामण्डलं तस्य समन्ततोऽस्ति ।
भामण्डले भान्ति जगन्ति येनरमादीनि तद्वत् मिथुदस्यदं स ॥ १७० ॥
यत् तत्र चोक्थ्यं तदहं स आत्मा योऽर्कोऽस्ति तज्ज्ञानमिति ब्रवीमि ।
ज्ञाने तु य कामसमयं जगन्नात्यशीतिरेपाशिलमूलमुक्थ्यम् ॥ १७१ ॥
आ मा यथा कामयते तथाऽस्मिन्नुदेति रूपं तदमुष्य कर्म ।
कामो जगत् काममय स आत्मा सोऽप्येन्यकामोऽश्नमतोऽस्य सोऽस्ति ॥१७२
य ईश्वरो नित्यमयं सकाम स सर्वकामोऽस्य हि कोपिकाम ।
धीर्नाम जीवोक्थ्यमिहोदितं स्याज्जीव चिदाभासमतो यदाम ॥ १७३ ॥
जीवोक्थ्यमित्थं परमेश्वर स्यात् कामो न तस्संभरतोभ्यरेऽस्मिन् ।
तस्मादनुकथ्य परमेश्वरोऽसौ सर्वज्ञ एवोऽस्ति च सर्वशक्तिः ॥ १७४ ॥
ता शक्तयस्तस्य भवन्ति कामा कर्म्माणि तान्यस्य जगन्ति सन्ति ।
स्तु कर्मरूपाणि च रूपनामान्येतत्त्रयं संमिलितं जगत्स्यात् ॥ १७५ ॥

## १३—असर्वजीवग्राह्यार्थत्व-सर्वजीवग्राह्यार्थत्वाभ्यां भेदः । ८

८ सर्वेऽपि जीवा निजगीस्थमर्थं गृह्णन्ति नान्यान्नायदृष्टमर्थम् ।
तदीश्वरज्ञानगतं तु सर्वेऽविशेषतस्तेन स जीवभिन्नः ॥ १७६ ॥

## १४—नानात्वैकत्वाभ्यां भेदः । ९

९ नाना तु जीवा व्यवहारभेदाद् यथाजथेया न तथेश्वरेऽपि ।
नानात्वलिङ्गं किमपि प्रपद्ये तेनेश्वरज्ञानमिदं सदैकम् ॥ १७७ ॥

## १५—व्यवस्थत्वैकरसत्वाभ्यां भेदः । १०

१० अचेतनं चेतनमित्ययमेतज्जगद् द्विधास्तीश्वरजन्यमस्मिन् ।
स्वप्ने तु जीवे द्विविधं प्रबोधे जडं सुषुप्तौ तु जगन्न किञ्चित् ॥ १७८ ॥
केचिद्विदुर्जीववदीश्वरेऽपि स्युस्ता अवस्था इति तर्कयाम ।
सुषुप्तिरूपः प्रलयोऽथसृष्टि स्वप्नोऽस्ति जाग्रत्यथ जीवमुक्तिः ॥ १७९ ॥

## १६—ईश्वरवृत्तित्व-जीवावृत्तित्वाभ्यां भेदः । ११

११ सर्वाणि भूतानि यथात्मनि स्युः स्वात्मा तु भूतेषु तथा स आत्मा ।
इयं व्यवस्था परमात्मजीवा मनो समा स्वस्वजगन्निमित्ता ॥ १८० ॥
इयान् विशेषस्त्विह वर्तते यज्जीवात्मकः सोऽखिलभूतसंघः ।
* परेश्वरस्यैव स पश्यतीमान् जीवात्ममूर्तत्वमुपेति नेशः ॥ १८१ ॥
यत्रास्ति विश्वं परमात्मकं तं जीवात्ममात्स्यस्य तु न प्रवेशः ।
जीवात्मकं मा विषयास्तु तत्रेश्वरप्रकाशो निहिता असङ्ग ॥ १८२ ॥
सिद्धान्तमाहुस्तत एव भूतान्येतानि सर्वाणि मयि स्थितानि ।
स्थितोऽस्मि भूतेषु तु तेषु नाहं मय्येव सर्वाणि ततानि तानि ॥ १८३ ॥
भूतानि न स्थान्यपि नैव मत्स्थान्येतानि सम्या मपृथक्त्वहेतो ।
पात्रस्थिता आप इमा न पात्रात्मनि स्थिता आत्मपृथक्त्वहेतो ॥ १८४ ॥
वायुर्यथाकाशगतः समन्ताद् व्याप्नोति खं किन्तु [illegible] सज्जते खम् ।
तथेश्वरस्य स हि भूतसंघः किन्त्वेषु नासज्ज्यत ईश्वरोऽयम् ॥ १८५ ॥

## १७—जीवजगदीश्वरजगतोः परस्परानुरोधः १२

१२ यद्बहिर्जगद् यद्विधमस्ति तद्विधास्त्यान्तरतोऽन्तर्जगति प्रवृत्त्य ।
यद् यदाब्देन हृदयेन युज्यतेऽन्तरात्मकं स स तयैव दृश्यते ॥ १८६ ॥
कश्चित्पुनर्बाह्यजगद्गतार्थगा ये ये गुणास्तैः सफलेन युज्यते ।
अन्यान्ययोगात्स्वपि सोऽन्यथाऽऽन्तरः प्रकल्प्यते स भ्रम एव संशयः ॥ १८७ ॥
एतद्विरुद्धं क्वचिदन्तरात्मना स्वभावतो भावविशेष ऊह्यते ।
यथा स यत्नं कुरुते यथाऽऽन्तराकारेण सोऽर्थो लभते यदि स्थितिम् ॥ १८८ ॥
गृहं रथश्चक्रमथासनं कूर्च छुरी दर्पणमेवमादिकम् ।
पूर्वं यथूवान्तरमन्तरात्मना भूत ततस्तद्बहिरुद्भूतं हि ॥ १८९ ॥
क्वचित्तु बाह्यं परमात्मकं तं सूर्येन्दुशैलद्रुमगोहयादि ।
संयुज्य रूपाणि यथाऽन्तरात्माऽकरोत् तथा तानि बहिः करोति ॥ १९० ॥
तदित्थमन्तर्जगदानुरूप्यतो बहिर्जगद्यनुसरति क्वचित् ।
प्राधान्यतः किन्तु बहिर्जगद्विधामन्वेव चान्तर्जगतः प्रवृत्त्य ॥ १९१ ॥
यदान्तरात्मा तु बहिर्जगद्गतैर्धनैर्युतं स्थापितोऽह तर्हि स ।
युद्धं तदान्तर्जगदेव कल्पते धिरम्य तस्मादपि सुष्ठपिन्ययम् ॥ १९२ ॥

## १८—ईश्वरजगति जीवजगतोऽनुरोधाभावः १३

१३ जीवात्ममूलं हि तदान्तरं जगज्जीवात्मनो निग्रहणे निगृह्यते ।
दीपे प्रसन्ने ज्वलिते तिरोहिते तज्ज्ञा प्रमोदेन् प्रकाशेत् तिरोधयेम् ॥ १९३ ॥

---

* न त्वहं तेषु ते मयि ( गीता ) ॥

घटं तु पश्यामि यदा तदानीं घटावभासो न घटानुषक्तः ।
जपानुरागः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ॥ २२८ ॥
वयं यथार्थान् परिकल्पयामो यान् मानयित्वा पृथगेव तेषाम् ।
सत्ता हि तास्ता न तु सत्तया मे ते सन्ति यत् तान् हि पृथक् स्मरामः ॥ २२९ ॥
विज्ञातसत्ताश्रयवस्तुसत्ता चित्सत्तया भिद्यत इत्यवैमि ।
न धीः पृथक् चेत् कथमोदरांशं धृत्वाहमर्थान् जनयेदनेकान् ॥ २३० ॥
ज्ञानीयसत्ताऽर्थगता न चेत्स्यात् सा तर्हि तस्मिन् कुत आगतेति ।
अत्रोच्यते रूपवदत्र सत्ताऽप्याकस्मिकी संभवतीति मन्ये ॥ २३१ ॥
तैलं यदर्चिर्भवतीह तैलात्कर्माणि रूपाणि पृथग् भवन्ति ।
आयान्ति तानीह यतो यथा वा वियन्ति सत्तापि तथात्र भाव्या ॥ २३२ ॥
न कारणं ह्येति नवीनकार्ये तूदेति धर्माश्च न वा भवन्ति ।
वस्तुस्वभावो हि तथा ततोऽस्मिन् न शङ्क्यमित्यस्ति मतं तृतीयम् ॥ २३३ ॥

---

घटं तु पश्यामि यदा तदानीं घटावभासो न घटानुरक्तः ।
अपानुरागः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ॥ २२८ ॥
एवं तथार्थान् परिकल्पयामो यान् भावयित्वा पृथगेव तेषाम् ।
सत्ता हि तास्ता न तु सत्तया मे ते सन्ति यत् तान् हि पृथक् स्मरामः ॥ २२९ ॥
विज्ञातसत्ताश्रयवस्तुसत्ता चित्सत्तया भिन्नत इत्यवैमि ।
न धी पृथक् चेत् कथमीश्वरांशं धृत्वाहमर्थान् जनयेदनेकान् ॥ २३० ॥
ज्ञानीयसत्ताऽर्थगता न चेत्स्यात् सा तर्हि तस्मिन् कुत आगतेति ।
अत्रोच्यते रूपवदत्र सत्ताऽप्याकस्मिकी संभवतीति मन्ये ॥ २३१ ॥
तैलं यदर्चिर्यततीह तैलात्कर्म्माणि रूपाणि पृथग् भवन्ति ।
आयान्ति तानीह यतो यथा वा वियन्ति सत्तापि तथात्र भाव्या ॥ २३२ ॥
न कारणं ह्येति नवीनकार्य्यं तूदेति धर्माश्च न वा भवन्ति ।
वस्तुस्वभावो हि तथा ततोऽस्मिन् न शङ्क्यमित्यस्ति मतं तृतीयम् ॥ २३३ ॥

---

)

# अथ ज्ञानसत्तयोः पौर्वापर्य्यमूलकोऽ ज्ञाङ्गिवादः ॥ (६)

## ४–ईशजगत्सत्ताया ज्ञाननिघ्नत्वम्।

१ सत्तावशादस्य ह्युपलब्धिरस्योपलब्धितो योऽपलपेदस्य सत्ताम्।
प्रश्नस्य चैतस्य कृतः समाधिर्योद्धान्तरद्विष्ठजगद्द्विधाभ्याम् ॥ २३४ ॥
अस्तीश्वरज्ञानमतोऽस्ति तज्जगत् तथास्ति मज्ज्ञानमतोऽस्ति मज्जगत्।
सत्तोपलब्धिश्च न भिद्यते मिथः स एक आत्मोभयथा प्रवर्तते ॥ २३५ ॥
ज्ञानं यदीत्यस्ति न चागृहीत्वा भवेत् प्रकाशः सततं स्वभावात्।
ग्राह्यग्रहीत्रि यदिदं द्विरूपं ग्राह्यं रसामान्यमवैमि सत्ताम् ॥ २३६ ॥
यो ग्राहकः स द्विविधोऽस्ति जीवस्तदीश्वरश्चेति जगद्विधर्त्ता।
ग्राह्यं तु सत्तामयमस्ति विश्वं ग्राह्यग्रहीत्रोरयिनाहृतत्वम् ॥ २३७ ॥

## ५–जैवज्ञानस्य बाह्यसत्तानिघ्नत्वम्।

२ किन्त्वस्य ज्ञानमथास्ति मद्बहिर्यदास्ति तस्मादुपलभ्यते जगत्।
यद्विर्न चेदस्ति घटस्तदा भवेच्छतोऽपि साक्षात् क्रियते न तद्घट ॥ २३८ ॥
तस्माद्बाह्यवस्तुनि यास्ति सत्ता ततो मम ज्ञानमुदेति बाह्ये।
मज्ज्ञाननिघ्नास्ति न वस्तुसत्ता सत्तावशाज्ज्ञानमुदेति मेऽस्मिन् ॥ २३९ ॥

## ६–ज्ञानमयजीवस्य बाह्यसत्तानिघ्नत्वम्।

३ अस्माकमानन्दमयस्य चिन्तो न ज्ञानतिनैव तु वस्तुसत्ता।
ज्ञानं यथा भासयतेऽर्थसत्ता सत्तापि गृह्णाति तथा चिदंशम् ॥ २४० ॥
जीवात्मभेदात्त यथा चिभिन्नज्ञानार्थसत्ताजनका भवन्ति।
सन्त्येव वस्तूनि तथा चिदंशग्राहीणि तेष्वस्त्यहमर्थसिद्धि ॥ २४१ ॥
तदीश्वरज्ञानगतार्थरूपं जगद् भवेज्ज्ञाननिबन्धनं तत्।
जीवात्मकज्ञानमिदं तु दृष्टं तद्वैपरीत्याज्जगदर्थमूलम् ॥ २४२ ॥
न चेज्जगत् स्यान्न तदाहमाख्या जीवाश्चिदाभासमया भवेयुः।
सूर्यस्य यद्वत् प्रतिबिम्बदृश्ये जलस्य वाद्यस्य भवत्यपेक्षा ॥ २४३ ॥



# अथ त्रिसत्याद्वैतवादः ॥ ७ ॥

## ७–जडजीवेश्वराणां विशिष्टाद्वैतम् ।

१ इत्थं स्वरूपात् पृथगस्ति विश्वं जीवात्मकॢप्तानि जगन्ति सन्ति ।
जीवा जगन्मूलतया च सन्ति प्रभुश्च तेषामयमीश्वरोऽस्ति ॥ २४४ ॥

२ जडजीवेश्वरभेदात् त्रीण्यधिकरणानि सर्वधर्माणाम् ।
आहुस्तान्यधिभूतं चाध्यात्मं चाधिदैवतं चेति ॥ २४५ ॥
जडाश्च जीवाश्च तथेश्वरश्च त्रिभिर्विशिष्टं यदिहैकरूपम् ।
तद् ब्रह्म तच्च द्विविधं परं चापरं च नातः परमस्ति किञ्चित् ॥ २४६ ॥
* अचित्तु कृत्स्नं पृथगेकमेकं सात्मास्ति जीवेन चिता प्रवेशात् ।
जीवश्च कृत्स्नः पृथगेक एकः सात्मेश्वरेणास्ति तदित्थमैक्यम् ॥ २४७ ॥
जीवस्य देहोऽस्ति जडैः कृतोऽयं जीवैः कृतो देह ईश्वरस्य ।
जीवः शरीरे विभुरेयमीशो जीवे विभुस्तन्मय एव जीवः ॥ २४८ ॥
चिताऽचिता चोपहितोऽयमीशश्चितोऽचितश्चानिशमेक ईष्टे ।
अयो विशिष्टं तु चिताचिता चेश्वरं हि तं ब्रह्मपदेन वच्मि ॥ २४९ ॥
जीवस्य नाना प्रभवन्त्यवस्थाः स्वप्नादिका बन्धयुतोऽपि सोऽस्ति ।
अनन्तकल्याणगुणस्तु दोषैरस्पृष्ट एवेश्वर एव भाव्यः ॥ २५० ॥
क्षुधापिपासारहितो विशोको विमृत्युरेवं विजरो विपाप्मा ।
स सत्यसंकल्पकसत्यकामोऽप्यस्तीश्वरस्तत्कृपया तु जीवः ॥ २५१ ॥
जीवोऽस्वतन्त्रोऽस्य हि भुक्तिमुक्ती स्वतन्त्र एवेश्वर आतनोति ।
तदीश्वरानुग्रहतस्तु जीवोऽप्यदोषकल्याणगुणाकरः स्यात् ॥ २५२ ॥
यदा हि तत्कर्मण एव ईश्वरो यदानुगृह्णाति तदैव जीवतः ।
सर्वाणि कर्माण्यपसृज्य बन्धनादुन्मोच्य साम्यं निजमस्य पश्यति ॥ २५३ ॥
निर्दोषकल्याणगुणाकरत्वतः प्राकाम्यतः साम्यमिहास्य जायते ।
न त्वेष मुक्तो जगतः प्रसर्जनं रक्षां क्षयं चेश्वरवत् करिष्यति ॥ २५४ ॥
ब्रह्म द्विधा प्रागुदितं परं चापरं च तत्रास्त्यनिरुक्तमाद्यम् ।
अव्यक्तमव्याकृतसूक्ष्मरूपं तदस्य विश्वस्य हि बीजमस्ति ॥ २५५ ॥
स्थूलं तु यद्विश्वमिदं विभाति ब्रह्मापरं तत् परिकार्यमेतत् ।
इदं परस्मादुदितं परस्मिन् स्थितं परस्मिंश्च विलीयते सत् ॥ २५६ ॥
तत्रापरस्यास्ति परेण तेनाभेदस्तदेकं ह्यभवद् द्विधेदम् ।
उद्भूय तस्मात् परतोऽपरं सत् पुनः परस्मिन् भजति प्रलीनम् ॥ २५७ ॥

---

* "तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् । आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे"
( भाग ११ । ७ । ९ ]
इति भागवते त्रयाणामेषां जगज्जीवेश्वराणामैक्यभावना विधीयते ।

प्रतिक्षणं तत्परतोऽपरोऽभूत् परश्च चापैत्यपरं प्रतिक्षणम् ।
मध्येऽन्यथा रूपतयोऽपरश्च क्वचिद्विच्छिद्यते क्वापि नवं प्रवर्तते ॥ २५८ ॥
विशिष्टतोऽस्मात् परतो विशिष्टं स्वेतरापरं विश्वमिदं बभूव ।
विशिष्टयोश्चास्ति तयोर्न भेदस्तस्माद् विशिष्टाद्वयमेतदाहुः ॥ २५९ ॥
विशिष्टमेतद्द्वयमपरं परं वा सत्यैस्त्रिभिर्भिन्नतमं स्वरूपात् ।
अविच्छिदीशैरुदितं विशिष्टत्रिसत्यमेतत् प्रवदन्ति तस्मात् ॥ २६० ॥

## ८—जगज्जीवेश्वराणां सत्यत्वात् तद्विज्ञानस्य त्रिसत्योपनिषत्त्वम् ।

नैवं स्थिते विश्वमसत्यमेतज्ज्ञानं च सत्यं विषयाश्च सत्याः ।
ज्ञानं च जीवेश्वरभेदतः स्याद् द्विधा तयोर्विश्वमपि द्विधा स्यात् ॥ २६१ ॥
एकः स ईशो बहवस्तु जीवा एकं बहिर्धा जगदीश्वरस्य ।
अन्तर्जगन्त्यत्र बहूनि तु स्युर्नातः परं किञ्चिदिहास्ति वेद्यम् ॥ २६२ ॥
सर्वेश्वरोऽसौ जगदुच्यतेऽसज्जीवस्त्रयं स्यात् सदसत्स्वरूपम् ।
वदन्ति तस्माद् भुवनं भविष्यन् भूतं च विज्ञाः सदसत्पदेन ॥ २६३ ॥
अहं हि सत्यं सकलः परेऽपि जीवा अहंत्वादविशेषसत्याः ।
यस्माच्च तेषामुपपत्तिरन्या तस्माज्जगत्सत्यमिति ब्रवीमि ॥ २६४ ॥
इत्थं जगज्जीवतदीश्वराख्यं सत्यत्रयं सत्यमिदं परीक्ष्यम् ।
तथापि मुख्यः परमेश्वरोऽयं जीवा जगच्चेदमुपासतेतम् ॥ २६५ ॥
इत्थं त्रिसत्ये जगतस्तदीशितुः सत्यत्वमस्तीह परीक्षयेक्षितम् ।
ब्रह्माहमस्मीत्यहमर्थसत्यता त्वद्वातमो भाति ततोऽन्ययोरपि ॥ २६६ ॥
एवं त्रिसत्योपनिषद्विवेके मतीय तत्त्वान्तरभेदरूपा ।
उपासनाधर्म उपासकानां प्रवर्ततेऽनेकविधो जनेषु ॥ २६७ ॥

———०———

# अथ उपासनावादः (८) ॥

## ९—आत्मनि हृद्ग्रन्थिवशाद् बन्धप्रकारः १

१ एकत्र विन्दौ कतिचिद्बलानीतरेतरेण ग्रथितानि चेत्स्युः ।
हृद्ग्रन्थिरेष ग्रथितस्ततोऽसावात्मा रसो बद्ध इवावभाति ॥ २६८ ॥
बलानि यावन्ति भवन्ति पूर्वाण्यपूर्वमत्र ध्रियते बलं चेत् ।
प्रबद्ध्यत्यात्मनि चेद्रसं तद् ग्रन्थिं द्वितीयं तु तदा वदामः ॥ २६९ ॥
तिरः शरः कन्दुकमेवमूर्ध्वं प्रक्षिप्यते तत्र हितं बलं तत् ।
न बद्ध्यत्यत्र रसं मृदश्चेत् काचो भवेद् ग्रन्थिरसौ द्वितीयः ॥ २७० ॥
हृद्ग्रन्थिमोक्षेन च बन्धमोक्षः स्यादात्मनस्तत्र रसो निसर्गात् ।
स्वयं स बद्धः स्वयमेव मुक्तो जगत् कदाचित् स कदाचिदात्मा ॥ २७१
यदस्त्यखण्डं विभु चैकरूपं बन्धान्मितिं प्राप्य तु तत्र खण्डाः ।
यथा यथा चैव विमुक्तिमेयात् तद्ग्रन्थिभेदात् स विकासमेयात् ॥ २७२
आत्मा यदा बन्धमुपैत्यकस्माद् ग्राह्यस्तदा स्यादयमर्थसंज्ञः ।
बन्धप्रभावेण विभुः स आत्मा देहे धृतः सन् भवतीह देही ॥ २७३ ॥
अल्पज्ञतां याति शरीरबन्धादत्यन्तबन्धाज्जडतामुपैति ।
बद्धं पुनर्बन्धमुपेत्य बन्धं पुनः पुनश्च लभते जगत्तत् ॥ २७४ ॥
मनो यदि प्राणगतिं प्रपन्नं वाक्त्वं गतं स्थूलदशामुपैति ।
तल्लीयते तेन विचित्तता स्यात् प्राणे क्षये स्यादिह पारवश्यम् ॥ २७५ ॥
यथा यथा बन्धमुपैति तस्मिंस्तथाधिकं स्यादिह पारवश्यम् ।
यथा विमुच्येत मनो विकासात् तथा क्रमेणैव भवेत् स्वतन्त्रः ॥ २७६ ॥
प्राणादियं वाक् प्रथमे तु बन्धे वागभ्यबन्धाद् भवतीह वायुः ।
वायुः पुनर्बन्धमुपेत्य तेजो बन्धाज्जलं तत् पृथिवी च बन्धात् ॥ २७७ ॥
पृथ्वी च बन्धादिह वृक्षपत्रं बन्धाच्च बन्धो मुहुरित्थमेति ।
भवेत् कथंचित् क्रममुक्तिरेषां पृथ्वी पुनः प्राणविधामुपैति ॥ २७८ ॥

## १०—बन्धमुक्त्युपायक्रियाया उपासनात्वम् २

२ जीवस्तु नात्यन्तमयं प्रबद्धः स्फुटं स विज्ञानमयोऽत्र दृष्टः ।
तथापि देहे ध्रुवमेष बद्धः प्रतीयते पाप्मनि मानयोगात् ॥ २७९ ॥
मुक्तः क्रमाद् बन्धमुपैति बद्धो विमुच्यते च स्वयमुत्क्रमेण ।
इत्थं स्वभावादिह बन्धमोक्षौ पर्यायतः संभवतो विविक्तौ ॥ २८० ॥
यया तु बन्धात् भवतीह मुक्तो जीव क्रियामाहुरिमामुपास्तिम् ।
उपासनातो बलवान् विमोक्षः पुनर्न बन्धः क्रमते ह्यमुष्मिन् ॥ २८१ ॥

जीवात्मकज्ञानमुपास्तियोगात् तदीश्वरज्ञानसमत्वमेति ।
बन्धस्य तस्मिन् पुनरप्रसक्तेर्न जीवतामेति स एकरूपः ॥ २८२ ॥
इत्येवमुक्तं बलवद्रसज्ञैर्निसर्गसंभावितबन्धमुक्तेः ।
उपायभूतं सदुपास्तिकर्माथवाऽत्र वक्ष्याम्यधिकं च किञ्चित् ॥ २८३ ॥

## ११ ऐश्वरमनसि जैवमनःस्थिरीकारस्योपासनात्वम् ३

३ मनोऽस्ति जीवस्य तु चञ्चलं स्थिरं शान्तं नितान्तं परमेश्वरस्य तत् ।
स्थिरीकृतं वृत्तिनिरोधतो मनो जीवस्य योगं लभते परेश्वरे ॥ २८४ ॥
चक्षुः स्थिरं चेत् प्रतिबिम्बमस्थिरं न तत्र योगः प्रतिबिम्बचक्षुषोः ।
स्थिरीकृतःस्यात् प्रतिबिम्ब एव चेत् सांनिध्यमायाति स चक्षुषि स्वयम् ॥ २८५ ॥
यद्वत्तु योगं तमुपासतो मनः सांनिध्यमायाति हि जैवमैश्वरे ।
तत्संयमादीश्वरशक्तिरञ्जसा जैवे समायाति ततोऽर्थसिद्धय ॥ २८६ ॥
यो येन योगं लभते ध्रुवं तयोस्तत्र भवेत् पुष्कलधर्मसंक्रमः ।
उपास्यशक्तिर्ध्रुवमत्र संक्रमत्युपासके साधु सवेदुपास्यते ॥ २८७ ॥

## १२—क्रिया-भक्ति-ज्ञानयोगाः ४

४ योगस्त्रिधा कर्ममुखेन, भक्त्या, ज्ञानेन कर्मास्ति महत्त्वहेतुः ।
भक्तिः सुखाथाय तृतीयमेषां जीवस्य तस्येश्वरसाम्यहेतुः ॥ २८८ ॥
न स्वार्थमिच्छन् न परार्थमिच्छन् निष्कारणं यद्विदधाति कर्म ।
सामान्यतः सर्वजगत्य यत् स्याद्धितावहं नाम स कर्मयोगः ॥ २८९ ॥
एकान्ततः स्वार्थमिहानपेक्ष्य प्रस्तौति यद्विश्वमतीनकर्म ।
समृद्धिमायाति हि तेन विश्वं सोपासना सिद्ध्यति विश्वमूर्तेः ॥ २९० ॥
यो मन्त्रयोगो लययोग एवाभिनवक्रियोगो हठयोग एवम् ।
यो राजयोगश्च त एव योगा सर्वे प्रसिध्यन्ति हि भक्तियोगाः ॥ २९१ ॥

## १३ आत्मार्पणरूपा प्रपत्तिर्भक्तियोगः ५

५ प्रपत्तिरेषात्मसमर्पणं यन्महेश्वरायैव करोति जीवः ।
युङ्क्ते स्वमंशं परतः परं वा स्वस्मिन् द्विधात्मार्पणमित्यमस्ति ॥ २९२ ॥
उपासना सा यदि जीवतन्त्रं जीवोऽर्पयेदीश्वरतन्त्रमन्ये ।
प्रजापतेः शिल्पमयं स्वशिल्पैः संसृज्य संस्कृत्य करोति कक्ष्म् ॥ २९३ ॥
यनोऽस्य: प्रकृतधर्म येदो तन्त्रे निविष्टः स हि शिल्पयोगात् ।
आत्मतामेति यदित्थमेशे स्वबुद्धियोगोऽस्ति स भक्तियोगः ॥ १९४ ॥

---

ततःस्वाम्यायेश्वरप्रणिधानानि क्रियायोग इति योगसूत्रविरोधाद्भामाथा' इ मायद्धाम स्वार्थमेश्वरप्रणिधानरूपत्वात् । अतएवाह 'एकान्ततः'—इति ॥

अपूर्वभावे यदि जीवबुद्ध्या कुरुते निवेश्येश्वरभावमेदम् ।
अपूर्वमर्थं विदधद्द्विधा पुष्णाति विश्वं स च भक्तियोगः ॥ २९५ ॥
जीवस्थभावोऽस्य बहिर्जगत् तन्मृद्भावतूलादिभिरैशभावैः ।
भक्त्या युतं बाह्यजगद्गतं स्यात् वासोघटाद्यं स हि भक्तियोगः ॥ २९६ ॥
जीवो य आत्मानमपूर्वभावस्वरूपमैशेऽर्पयतीह भावे ।
तेनायमात्मा परमेश्वरस्थो भक्त्या भवेत् तेन स भक्तियोगः ॥ २९७ ॥

## १४—अपरा भक्तिः प्रेम्णा, परा भक्तिः श्रद्धया ६

उपासनं तद् द्विविधं प्रपद्येऽवरं परं चेति मनोविशेषात् ।
स प्रेम यत्रास्ति मनोऽवरं तत् परं तु स श्रद्धमनः कृतं स्यात् ॥ २९८ ॥
रजोऽनुयोगान्मनसि स्वतः स्यात् प्रेमा, व्यपाश्रित्य गुणांस्तु सोऽस्ति ।
प्रेमा गुणानीक्षत एव तांस्तानत्यल्पमात्मानममुं स पश्येत् ॥ २९९ ॥
गुणाननेकान् युगपन्न शक्तो द्रष्टुं ततस्तन्मनसि भ्रमं स्यात् ।
त्यागमहात्यन्तिककर्मयोगो नैकान्तता स्यादवरं ततस्तत् ॥ ३०० ॥
नानागुणप्रत्ययतश्च तत्र क्षिप्तं मनस्तत्र न योगसिद्धिः ।
उपास्यमात्मेतरतश्च पश्यन्नस्मिन् गतः स्यादवरं ततस्तत् ॥ ३०१ ॥
प्रेमा मनोबन्धनहेतुरस्माद्याद्वैतसंपत् परदेवतायाम् ।
आनन्दमत्रानुभवत्ययं नानन्दः स्वयं स्यादवरं ततस्तत् ॥ ३०२ ॥
दृष्ट्वा गुणानेव गुणाश्रये यदि स्थिति हृद्यमेति मनोऽथ तत्र चेत् ।
दोषान् गुणान् वा न परं व्यपेक्षते श्रद्धा तदा सास्ति मनोऽत्र तन्मयम् ॥ ३०३ ॥
प्रेमा यदेति स्वयमाविशय्यं श्रद्धा तदा रूपमुदेति भिन्नम् ।
तद्रूपवत् तत्र मनः स्थितं स्यात् प्रेमवत् तत्र मनोऽस्ति यद्वम् ॥ ३०४ ॥
अस्तित्वमाहुर्विषयास्तितायां अबाधितायां ग्रहणं दृढं चेत् ।
तदन्यथात्वग्रहणातिरेकाच्छ्रद्धानमुक्तं मनसः प्रतिष्ठा ॥ ३०५ ॥
श्रद्धेश्वरे प्रत्ययसंप्रयाहृतश्चिरं स्थिरं भाति निरन्तरं यदि ।
श्रद्धा तदा स्याद् दृढभूमिरित्यतो महामहिम्नोऽल्पमहिम्नि संश्रयः ॥ ३०६ ॥

## १५—श्रद्धोपासनोदाहरणम् ७

यो नीलिमा व्योम्नि नमस्करोमि तं नापरं वायुघनं नु कंचित् ।
उपास्महे कृष्णकरप्रसारं चिदा मनो ध्यानमयं ययं नु ॥ ३०७ ॥
उपास्महे केपि समस्तमेतत्प्रणाद्धि तुच्छं क्षणिकं च नाशम् ।
उपास्महे किन्तु परम्परागतमत्र साधर्मिकं च कर्म ॥ ३०८ ॥

## १६—श्रद्धोपासनायाःसमानप्रत्ययप्रवाहरूपत्वम् । ८

८ आत्मा मनश्चेन्द्रियवर्ग एषां योगेन यज्ज्ञानमुदेति तत्र ।
प्रमेयरूपो भवति प्रमाता तं प्रत्ययं वैषयिकं प्रतीम ॥ ३०९ ॥
स प्रत्ययश्चेत् क्रियते समानप्रवाह एवं यदि तत्र धत्ते ।
श्रद्धामनारोपकृतामनन्याभ्यासतस्तर्हि मनस्तथा स्यात् ॥ ३१० ॥
मनो भवेत् यद्विषयकमत्र तस्यामनोऽप्यत्र तथा स्थितिः स्यात् ।
१ श्रद्धामयोऽयं पुरुषोऽस्ति तस्माद् यच्छ्रद्ध एवोऽस्ति स एव सोऽस्ति ॥ ३११ ॥
२ उपासनं नाम समप्रवाहः संप्रत्ययो निश्चलवृत्तिरूपः ।
३ तस्माच्छ्रुतिः प्राह यथा यथा तं ह्युपासते तद्भवन्ति हीति ॥ ३१२ ॥

## १७—ज्ञानयोगस्वरूपम् । ९

९ ये ये पदार्था जगति प्रसिद्धाः प्रत्यर्थमेषां पृथगस्ति विद्या ।
विद्या जगत् तत् परमेश्वरस्थं तद्वेदय साक्षात् कुरुते परेशम् ॥ ३१३ ॥
अर्था हि यावन्त इमेऽखिलानां विद्या पृथक् नागमाय शक्या ।
आत्मानमेव स्वमतः प्रविद्यादेकं स कृत्स्नाणुजगन्मयोऽयं ॥ ३१४ ॥
आत्मानमेकं यदि कोऽपि विद्याद् यथार्थतः सर्वजगत् स विद्यात् ।
साक्षात्कृतस्तेन महेश्वरः स्यात् स एक भूयोऽत्र परात्मनि स्यात् ॥ ३१५ ॥

## १८—उपासनोपयोगः । १०

१० उपासनैषा त्रिविधोपदिष्टाऽन्तरात्मनः स्यात् परमात्मयोगः ।
सर्वत्र धर्मस्य हि तस्य लाभः स्वल्पोऽपि दुःखेर्महतो भयात्र ॥ ३१६ ॥
नोपासना काचिदिहास्ति तादृशी जीवस्य यत्रामलं न वर्द्धते ।
उपास्य तु स्त्री यदि दुर्बलस्तदा निधिच्युते सास्त्यङ्गतेति श्रूयताम् ॥ ३१७ ॥

## इत्युपासनावादः ८ ॥

इति तृतीयकाण्डे त्रिशिष्टाद्वैत विज्ञान नाम प्रथमं पर्व समाप्तम् ॥
( विशिष्टत्रिसत्योपनिषत् )

—:०—

१ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ,— इति भगवद्गीता
२ उपासनं नाम समानप्रत्ययप्रवाहकरणम् ,— इति शाङ्करभाष्यम् ( ४ । १ । ७ ) ॥
३ तं यथा यथोपासते तदेव भवति ,— इति छान्दोग्योपनिषत् ।

# अथ ईश्वरैकसत्योपनिषत् द्वितीयं पर्व

## तत्रादौ त्रिपुटीतादात्म्यम् ।

### १—जगज्जीवेश्वराणां त्रित्वनिरासः ॥

१ इत्थं त्रिसत्यं प्रवदन्ति सन्तःसन्तोपमायान्ति तु तत्र नान्तः ।
परे महान्तः प्रतिजानते ते सत्यं हि संभाव्यत एकमेव ॥ १ ॥
अस्तीश्वरस्तज्जगदस्ति नित्यं जीवाश्च तेषां च जगन्ति सान्त ।
इत्थं त्रिसत्याः प्रवदन्ति तत्र भ्रमस्त्रिधात्वं तदसत्यमस्ति ॥ २ ॥
ज्ञानात् पृथग् ज्ञेयकुलं तदित्थं प्राहुस्त्रिसत्या न तथा तु विज्ञः ।
ज्ञानादभिन्नः खलु तद्विधतः स ज्ञेयवर्गो न पृथक्पदार्थः ॥ ३ ॥

### २—प्रमाणस्येश्वरतन्त्रत्वम् ।

२ विभाति हि ज्ञानमिदं चतुर्भिर्भागैः प्रमाता प्रमितिः प्रमाणम् ।
प्रमेयमेतेषु च मातुरेव प्रमाणभिन्नत्रयमस्ति रूपम् ॥ ४ ॥
अहं प्रमाता प्रमितिस्तदंशुर्व्याप्तप्रकाशो बहिरर्थपृक्तः ।
यया प्रणाल्यांशुरयं बहिर्धा याति प्रमासाधनमिन्द्रियं तत् ॥ ५ ॥
एकोऽपि यद्रूपरसादिभिन्नाऽऽत्मना स निष्पद्यत आत्मरश्मिः ।
भिन्नेन्द्रियद्वारवशात् तदाहुस्तदिन्द्रियं भिद्यत आत्मरश्मेः ॥ ६ ॥
जीवात्मतन्त्रैतदिन्द्रियं यद्रूपादि भिन्नप्रतिपत्तिमूलम् ।
बाह्यार्थवत् स्यात्तदपीश्वरीयज्ञानोद्भवं वस्तु न जीवक्लृप्तम् ॥ ७ ॥

### ३—प्रमितेः प्रमात्रा भेदाभावः ।

३ अथ प्रमाता प्रमितिः प्रमेयं जीवात्मक्लृप्तं त्रयमत्र रूपम् ।
तत्र प्रमातुः प्रमितिर्न तावत् प्रभिद्यते रश्मिविकासरूपा ॥ ८ ॥
ज्ञानं प्रकाशो भ्रमतेऽकनाभेरुत्थाय सर्वां दिशमभ्युपैति ।
ज्योतिर्घनो नाभिगतः स आत्मा ज्ञाता ततो ज्ञानमयं प्रकाशः ॥ ९ ॥
ज्योतिर्घनाज्ज्योतिरिदं पृथग्यत् प्रतीतमप्यस्ति न तद्विभिन्नम् ।
स्वं मण्डलं बाह्यमथान्तरं च द्विधा विभज्य प्रतितिष्ठतीदम् ॥ १०

### ४—अन्तर्बहिर्भेदात् प्रमेयस्य प्रमात्रा भेदाभेदौ ।

४ ज्ञाने तु यद्भाति जगत् तदुक्तं तत्र द्विधा संप्रतिपन्नमस्ति ।
यदस्ति किञ्चिद्बहिरर्थरूपं तदेव मज्ज्ञानगृहीतमस्ति ॥ ११

यद्वाऽन्यदस्त्यन्यदिदं विभाति यदि जगद्बोधवद् समस्ति ।
न तत् प्रपश्यामि तन्मतं ज्ञाने प्रवेशं शमने गुरुत्वात् ॥ १२ ॥

## ५ अथ जीवान्तर्जगतोरैक्यम् ।

५ जपाकुसुमः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ।
इत्थं वदन्तीति वदन्तु किन्तु ब्रूमो वयं नान्यपृथग् जगत्तत् ॥ १३ ॥
यद्यत्र पश्यामि किमप्यथेमि तदस्ति सर्वं मम बोधरूपम् ।
अत्रैव तद्रूपमगात् कथं स्यं स्वहिमद् गतं स्यात् तदभिन्नमेतत् ॥ १४ ॥
बहिः स्थितार्थेन यदैव जीवात्मदृष्टिमेत्याति कदापि योगम् ।
स तत्परिच्छेदमवाप्य सद्यस्ताद्रूपं स्वरूपं प्रतिपद्य भाति ॥ १५ ॥
ज्ञानं निरिच्छामिममिं च पृष्टा ज्ञानं तदन्यर्विरतानि कस्याः ।
ज्ञानं तदूर्ध्वं तदधस्तदग्रं यज्ज्ञायते ज्ञानमिदं समग्रम् ॥ १६ ॥

## ६ अथ ज्ञानज्ञेयसंबन्धनिर्धारणम् ।

### ( ज्ञेयस्य ज्ञानस्वरूपत्वम् )

६ तथापि च प्रथमिद प्रसक्तं ज्ञानात् पृथक्त्वसतया प्रसक्ते ।
ज्ञेयं पिता पुत्रस्तदुक्तं वा तदेकसत्त्वं दधिदुग्धवद्वा ॥ १७ ॥
तद्भिन्नसत्त्वं तदभिन्नसत्त्वं क्षीरं यथा वा क्षारफेनयुक्तम् ।
एषा तृतीये मम संप्रपत्तिर्ज्ञानाभिन्नसज्ञेयपि नाप्रतीतिः ॥ १८ ॥
तथापि च द्वैधमिदं यदुक्तं तद्भिन्नसत्त्वं तदभिन्नसत्त्वम् ।
अंशप्रभेदात्तु पृथक् तदूर्ध्व वियंशमात्रं हि यमूर्ध्व येयम् ॥ १९ ॥
अभिन्नसत्त्वं हि तदंशमात्रं तथापि च द्वैधमनुप्रयन्ति ।
जात्यन्तरं योऽयमुदेति योधाद् यदाऽखिलं बोध्यमयं स बोधः ॥ २० ॥
ज्ञाने पृथक्सत्त्वतयाऽऽहितं वज्ज्ञानातिरेके जगदस्यसत्यम् ।
ज्ञानस्य रूपं हि तदात्मलाभो ज्ञानातिरेकेण पृथङ् न तेषाम् ॥ २१ ॥
सत्यं यदि स्याज्जगदेकरूपं सदावतिष्ठेत न चान्तरस्य ।
भेदा भवेयुः स्वगता न येषां यो नाद्यबोधो भवतामभाव. ॥ २२ ॥
ज्ञानं तु सत्यं जगतः स आत्मा दिग्देशकालैस्तु न मीयते सः ।
अस्यानवच्छिन्नतयाऽऽत्मनोऽर्थास्तादात्म्यभूता प्रतिभान्ति बोधे ॥ २३ ॥
ज्ञानं स्थितं निर्विकृतं विकारेष्वसत्सु सत्स्वेषु सदैकरूपम् ।
ज्ञानं हि सत्यं तदसत्यमस्मिन् स्थितं तत. सत्यवदेव भाति ॥ २४ ॥
इत्थं यदन्तर्जगदस्ति तन्मे ज्ञानं तदेवाहमिति प्रसिद्धम् ।
ज्ञानं हि मद्रूपमथास्य विश्वं मज्ज्ञानरूपं तदभिन्नमेकम् ॥ २५ ॥

## ७ ज्ञेयस्य ज्ञानरूपत्वे आक्षेपः ।

७ अत्राहुरेके किल संभवेदिदं नेद्यैत यद्यर्थगणस्त्वन्वता ।
यद्यात्मनि द्रष्टरि दृश्यसंनिधावसंनिधौ वा न विशेष उद्भवेत् ॥ २६ ॥
ज्ञानाद्यदि ज्ञेयकुलं न भिद्यते प्रजागरस्वप्नसुषुप्तयस्तदा ।
न संभवेयुः क्वचिदात्मनो दशा अर्थान्वयानन्वयतस्तदुद्भवाः ॥ २७ ॥
सार्थो हृषीकैर्मनसा सहायवानात्माऽस्तुतेऽर्थांस्तु बहिर्जगद्गतान् ।
स जागरः, स्वप्नदशात्वनिन्द्रियो मनःस्थमर्थं यदि भासयत्ययम् ॥ २८ ॥
अनिन्द्रियो यद्यमना बहिर्जगद्यान्तर्जगद्य प्रतिचेष्टते न चेत् ।
नास्ति द्वितीयं न ततोऽर्थभासनं सुषुप्तिरद्वैतदशा तदात्मनः ॥ २९ ॥
अर्था अहंज्ञानसमुद्भवा यदि त्वात्मप्रतिष्ठा न पृथक् स्फुरात्मनः ।
अद्वैततोऽर्थानवभासनात्मिका सुषुप्तिरेषा न तदोपपद्यते ॥ ३० ॥

## ९—तदाक्षेपनिरासः ।

८ अत्रोच्यते मानसकोशयानयं ह्यात्मा स जीवः परमेश्वरोऽपि वा ।
इन्द्रो मनो व्योम बहिस्तथान्तरं तत्रार्थरूपोदय आत्मरश्मिभिः ॥ ३१ ॥
यथा बहिर्धा जगदाश्रयायाकाशो बहिर्धा किल भूमिकास्ति ।
अन्तस्तथान्तर्जगदाश्रयायाकाशो मनो नाम च भूमिकास्ति ॥ ३२ ॥
यथा रवे रश्मिकुलं पराहतं वायौ प्रकाशं जनयेद्वितस्तत ।
तथा मनस्येव पराहतैरमी अर्था भवन्त्यात्मगभस्तिभिः स्यत. ॥ ३३ ॥
बहिर्मनस्यात्मगभस्तयो गता. प्रजागरार्थं जनयन्ति वारतः ।
अन्तर्मनस्यात्मगभस्तयः स्थिता स्वाप्नान्तिकार्थानुपपादयन्ति तान् ॥ ३४ ॥
यदा मनः फेन च भूयसा मनोर्थकारिता हृत्तमसाभिभूयते ।
धूमावृतव्योमनि दीपकप्रभावदात्मनो ज्योतिरिहापवृज्यते ॥ ३५ ॥
अप्राप्य योगं मनसायमात्मा नार्थान् स उत्पादयते ततोऽयम् ।
वक्ताऽपि नो वक्ति न लोकते वा द्रष्टापि मन्तापि न मन्यते वा ॥ ३६ ॥
नन्वात्मुरात्मा विभुरस्ति सर्वगो न तस्य योगो मनसा विहन्यते ।
अत्रोच्यतेऽर्कप्रतिबिम्बवद्भवेज्जीवा मनःस्थावरणं च केनचित् ॥ ३७ ॥
मनोऽपि चाकाशमिदं तदात्मनः प्रोद्भूय चालम्ब्य तमेव तिष्ठति ।
न चात्मनोऽन्यत्र मनोऽस्ति भासते तत्रार्थवर्गः पुनरात्मनो भवेत् ॥ ३८ ॥
अहं मनोमण्डलमध्यवर्ती स चिद्घनो मण्डलगाधितोऽर्था. ।
एवं त्रिवृद्रूपमहंपदार्थं मन्ये ध्रुवं तत् त्रयमेकवस्तु ॥ ३९ ॥

## ९—अथ ईश्वरबहिर्जगतोरैक्यम् ।

९ तथैव विज्ञानघनः स ओमिति प्रवर्तने मध्यगतस्तदाधितम् ।
अनन्तधीज्ञानिकनित्यमण्डलं तन्मण्डले ज्ञानविजृम्भणं जगत् ॥ ४० ॥

यदस्ति मज्ज्ञाननिमित्तमन्तर्गूढं तदैशं जगदीश्वरो वा ।
एकं महाज्ञानमिदं बहिर्वा जगत् तदेतच्च विभात्यनेके ॥ ४१ ॥
तत्रापि रूपाणि भवन्तु नाना ज्ञानं तु रूपोपहितं न भिन्नम् ।
रूपाण्यसत्यानि विनाशवत्त्वात्प्रत्यक्तु नो नश्यति तद्धि सत्यम् ॥ ४२ ॥
ज्ञानं हि सर्वं जगत स आत्मा दिग्देशकालैस्तु न मीयते सः ।
अस्यानवच्छिन्नतयाऽऽमनोऽर्थास्तादात्म्यभूता इह सन्त्यदृश्याः ॥ ४३ ॥
यज्ज्ञान नानाप्रतिपत्तिकमतद्रूपनाशा. परिवर्तनानि ।
तद्रूपभेदा अपि निर्विशेषं तदैश्वरं ज्ञानमतस्तदेकम् ॥ ४४ ॥
ज्ञाने गिरिर्ज्ञाननिभे च वृक्षा ज्ञानं तदन्तर्निखिलानि कक्षाः ।
ज्ञानं तदूर्ध्वं तदधस्तदग्रं यज्ज्ञायते ज्ञानमिदं समग्रम् ॥ ४५ ॥
यत्तु त्रिसत्या इह वेद्यवेत्रो पृथक्त्वमाहुर्न तदस्ति साधु ।
बोधो हि बोद्धुः स च बोध्यरूपो बोधस्य रूपान्तरमप्यनन्यत् ॥ ४६ ॥
यदिन्द्रियं जीवगतं तदीश्वरादुपात्तमासीदिति नेश्वरे तु तत् ।
कुतश्चिदायाति ततोऽत्र वित्तयो वेद्यानि वेत्ता त्रिवृदेक ईश्वरः ॥ ४७ ॥
ओमेव विज्ञान महाप्रकाशो विज्ञानमेवास्ति जगत् तदित्यम् ।
तादात्म्यमेतं जगदस्ति भिन्नं न हीश्वरादीश्वर एव विश्वम् ॥ ४८ ॥
यतोऽमितत्वं तत एव चास्मिन्नानन्त्यमस्माच्च निराकृतित्वम् ।
एकत्वमस्मादविशेषताऽस्मात् सतोऽसतो वा न स भिद्यतेऽर्थः ॥ ४९ ॥

## १० अथ जीवेश्वरयोरैक्यम् ।

१० सत्यं यदीं नाम विदन्ति नित्यं विज्ञानमानन्दमनन्तमेकम् ।
तद् ब्रह्मशब्देन वदन्ति तस्मादहं च आत्मैव स नास्ति भिन्न ॥ ५० ॥
यदीश्वर सर्वगतः स एकः सर्वप्रतिष्ठास्ति तदैव जीव ।
तत्र प्रतिष्ठां लभतेऽथवाऽयं स्वे स्वे तु सर्वेश्वरयन्महिम्नि ॥ ५१ ॥
न स्वे महिम्न्येव पृथक्त्वमेदेशाव्याप्तमदेशानुपलम्भहेतो ।
यदीश्वरे तर्हि जगद्विदेते जीवा अपि स्युर्जगदेतदात्म्यात् ॥ ५२ ॥
अनन्तविज्ञानघनः स ईशस्तस्यैव मात्राभिरिमे जीवा ।
अहं परे चेति पृथक्तया स्युः समष्टितद्व्यष्टितोऽत्र भेदः ॥ ५३ ॥
तदीश्वरज्ञानगताश्चिदंशा बुद्ध्या धृता ईश्वररूपसाम्यम् ।
आयान्ति तद्वद् विषयं भजन्ते ते स्युश्चिदाभाससमा हि जीवा ।
यथास्य सूर्यस्य विकाशमण्डलं द्यौ के तदादर्शविभेदतः पृथक् ।
विभिन्नपात्रेषु जलेषु भेदतो भाषाचिदाभासविभिन्नता तथा ॥ ५५ ॥
दृश्यादिधा सूर्यसमानरूपा बिम्बा. समन्तात् परियान्त्यनन्ताः ।
त एव काचे च जले दृष्टा पृथग्वदाभान्ति तथा वयं स्म ॥ ५६ ॥
व्याभाति यावत्तु विकाशमण्डलं स तावदात्मा रविरेक दृश्यते ।
प्राग्वारिधौ पश्चिमवारिधौ तथा भिन्नोऽपि बिम्बो न रवेर्विभिद्यते ॥ ५७ ॥

ज्ञानप्रकाशा इह यावदास्थितास्तावान् स एकः परमेश्वरः स्थितः ।
न वै चिदाभासतया पृथक् पृथग् दृष्टोऽप्युपाधीतर एक ईश्वरः ॥ ५८ ॥
अखण्ड एकः परमेश्वरः स्थितः साम्येन भात्येव समन्ततः सदा ।
क्वचित् क्वचित् किन्तु कदाचिदासते चिद्ग्राहिणस्ते न विभाति खण्डवत् ॥५६॥
तमो रजः सत्वगुणातिरेकात् तज्जन्ममृत्युव्यतिरेकतश्च ।
यज्जीवनानात्वमुशन्ति तन्न ज्ञानेऽहमर्थे हि तदर्थबाधात् ॥ ६० ॥
या त्वात्मनः सा प्रकृतिः पुरोक्ता यया प्रकृत्याऽहमयं धृतः स्याम् ।
सर्वे गुणास्तत्र वसन्ति जन्मादयोऽपि तस्या न चितः कदापि ॥ ६१ ॥
प्रत्यात्म सैवा प्रकृतिर्विभिन्नोपतिष्ठते किन्तु जगत्तदस्ति ।
अथो चिदाभासत आस्तु योऽसावहं स जन्मादिविकारशून्यः ॥ ६२ ॥
उपाधिभेदादिह भेदकृत्स्वापि स्वयं चिन्न विभेदिमेति ।
सर्वे चिदाभासगताश्चिदंशा एकश्चिदात्मा परमेश्वरोऽस्ति ॥ ६३ ॥

## ११—प्रतिबिम्बसमर्थनम् ।

११ अत्राहुरेके परमेश्वरस्य न संभवन्ति प्रतिबिम्बभूताः ।
जीवा यतो नास्ति जगत् न च स्वं स्वस्मिन् कदाचित् प्रतिबिम्बितं स्यात् ॥६४॥
सूर्यातिरिक्ते मुकुरे जले वा रश्मिः परावर्तित एव रूपम् ।
दधाति किन्त्वत्र परेशतोऽन्यन्नो वै परावर्तनहेतुरस्ति ॥ ६५ ॥
अत्रोच्यते नास्ति जगन्न तावद् यथात्र पश्यामि तथा तदस्ति ।
ज्ञानेतरत्वं जगतो निरस्तं ज्ञानाद्विना सिद्धमिदं न भिन्नम् ॥ ६६ ॥
यद्याप्यसत्यत्वममुष्य मन्यामहे तदप्यस्य निजास्तितायाः ।
निराक्रिया ज्ञानगतां तु सत्तामालम्ब्य सर्वं जगदेतदस्ति ॥ ६७ ॥
सृष्ट्वा यथार्को व्यवहारपक्षे रश्मि परावर्तयतेऽपि तस्मिन् ।
तथा परेशः परमार्थपक्षे सृष्ट्वेदमत्र प्रतिबिम्बितः स्यात् ॥ ६८ ॥

## १२—ईश्वरैकसत्यतास्थापनम् ।

१२ आनन्द एवेश्वररूपमक्षयं ज्ञानं बलं द्वौ भजतस्तदंशौ ।
याः शक्तयस्ता हि पृथग्बलानि समुच्चयाच्छक्तिमतस्तु सत्ता ॥ ६६ ॥
ज्ञानानि जीवाः प्रभवन्ति सर्वे बलानि सर्वाणि जगन्ति सन्ति ।
कथं नु तानीश्वरतः पृथक् स्युर्ब्रह्मैव सर्वं नु जगत् सजीवम् ॥ ७० ॥
ग्राह्य ग्रहीत्रित्यमिदं द्विधास्ति स्वभावतो ब्रह्म ततो द्विधेदम् ।
प्रदृश्यते जीवजगद्विभेदान्न वस्तुतो जीवजगद्विभेदः ॥ ७१ ॥
जीवो जगच्चेत्युभयं तदेकममृतमस्तीत्यत एव मन्ये ।
सर्वं जगत् प्रत्ययनिष्ठमेकं तादात्म्यमापन्नमिदं विभाति ॥ ७२ ॥
न तर्कतः किन्तु स ईश्वरो मे प्रतीकतोऽप्यक्षमियोपलब्धः ।
सत्तां परिज्ञानमयो सुखं वा नास्वातमां पश्यति को जनेषु ॥ ७३ ॥

या निर्विशेषा परमेह सत्ता निःशेषविज्ञानसमुच्चयो यः ।
परास्ति या सर्वसुखस्य काष्ठा सत्ता चिदानन्दघनः स ईशः ॥ ७४ ॥
गोत्वं पशुत्वं च सचेतनत्वं द्रव्यत्वमर्थत्वमिति क्रमेण ।
संपद्यते यः परमोऽत्र भावः स ईश्वरः सा परमात्र सत्ता ॥ ७५ ॥
यास्तूललोष्टाश्मकदीपचक्रादिशक्तयोऽत्रोत्तरशक्तिनिघ्नाः ।
तासां पराशक्तिरशेषशक्तिः स ईश्वरः सा परमात्र सत्ता ॥ ७६ ॥
एकस्य यज्ज्ञानमतः परस्याधिकं तथान्यस्य ततोऽधिकं च ।
यतोऽधिकं नास्ति भवेद् ध्रुवं सा मात्रा पराऽसौ परमेश्वरोऽस्ति ॥ ७७ ॥
एकस्य मोदाऽधिकः परस्य ततः परस्यापि ततः परस्य ।
यतोऽधिको नास्ति ततो भवेद् ध्रुवं सा मात्रा परासौ परमेश्वरोऽस्ति ॥ ७८ ॥
मात्रा मिता यावदिहानुभूयते तावत्ततोऽन्यामपि धीरपेक्षते ।
स्वयिथमाप्य परममुपैति धीर्यामनन्तामामितां स ईश्वरः ॥ ७९ ॥
* आनन्दमोमक्षरमस्ति सत्यं नित्यं हि विज्ञानमनन्तमेकम् ।
यस्य चिदाभासमयास्तदंशा जगत्स तत्कर्मचितो नियतः ॥ ८० ॥
ब्रह्माऽद्वितीयं तत एकमेवेत्यावदमहे विश्वमिदं समस्तम् ।
ब्रह्मैकमेवं यदमप्यनन्ता महीश्च जाताः परमत्र विश्वः ॥ ८१ ॥

## १३—ऐक्यसमन्वयः ।

१३ जीवात्मनाऽन्तर्जगदस्त्यभिन्नं परमात्मनैवं च बहिर्जगत्तत् ।
जीवात्मनां यत् परमात्मनैक्यं मन्यामहे तेन तदेकसत्यम् ॥ ८२ ॥
वाक् प्राणतः प्राणकला मनस्तः प्रादुर्भवन्त्येवमिमा अवस्थाः ।
एकस्य तासामिदमेतदात्म्यं मन्यामहे तेन तदेकसत्यम् ॥ ८३ ॥
(१) अस्तीति बोधो,ऽपि च (२) सोऽस्ति, बोधो (३) रसः, स बोधोऽपि (४) च बोद्धृ
(५) रसोऽस्ति, (६) सत्तापि रसो, न चान्यन्मन्यामहे, तेन तदेकसत्यम् ॥ ८४ ॥

---

* ( ओम = प्रणव )

| | | | |
|---|---|---|---|
| 'अस्ति'–इति बोधरूपम् = अस्तीत्येव ज्ञायते<br>बोध अस्ति = तदिदं ज्ञानं सत्तावत् | ज्ञानेनानुगृह्यते सत्ता<br>सत्तयाऽनुगृह्यते ज्ञानम् | ज्ञानेनाप्यविनाभूता सत्ता<br>सत्तयाप्यविनाभूतं ज्ञानम् | १<br>२ |
| 'रस' इति बोधरूपम् = रस इतीदृशा ज्ञायते<br>बोधो बोद्धा बोध्य इति रसः = तदिदं ज्ञानं रस | ज्ञानेनानुगृह्यते रसः<br>रसेनानुगृह्यते ज्ञानम् | ज्ञानेनाप्यविनाभूतो रसः<br>रसेनाप्यविनाभूतं ज्ञानम् | ३<br>४ |
| रस अस्ति = "सर्वाधारः" कश्चिदस्ति<br>सत्ता रस = ज्ञानक्रियालम्बनत्वात् | सत्तयाऽनुगृह्यते रसः<br>रसेनानुगृह्यते सत्ता | सत्तयाप्यविनाभूतो रसः<br>रसेनाप्यविनाभूता सत्ता | ५<br>६ |

१४ ये ये त्रिसत्यैस्त्रिविधा इहोक्ताः सर्वे विशेषास्त इमे भवन्ति ।
सामान्यतस्ते पृथगुद्धृताः स्युः स निर्विशेषः परमो न आत्मा ॥ ८५ ॥
सर्वे विशेषा असदेव कथं तत्राविशेषस्य सदेव रूपम् ।
असन्मयं सद्यदखिलं प्रतीमस्तस्मात् समस्तं सदसद् वदामः ॥ ८६ ॥

# १४ उपासना ।

१५ यदीश्वरे स्वात्मसमर्पणं धिया विधाय स्वातन्त्र्यधियं विमुञ्चति ।
सोपासना तत्र च पीठिकात्रयी क्षुद्रैस्तु सेवा क्रियते प्रभोरिव ॥ ८७ ॥
सार्थक्रिया द्रव्यगतं निरस्यते द्वैतं त्रिधाऽद्वैतमिदं विधीयते ।
स्यात्त्रयं तत्क्रमतो विभूयते मध्यैः कृता मध्यमपीठिका हि सा ॥ ८८ ॥

"विकल्पितं वस्तुतया त्रिलोक्यामैक्यं यदा कार्यकारणवस्तुनः ।
यदीश्वरे मुद्गरपोऽखिलात्मनोऽप्यैक्यं तदद्वैतमुपैति भावतः ॥ ८९ ॥
ददाति भुङ्क्ते स्वपिति प्रबुध्यते यदन्मनो वाकृतनुभिः करोत्ययम् ।
नाहं करोमीति यदीश्वरेऽखिलं पश्येत् क्रियाद्वैतमिदं स पश्यति ॥ ९० ॥
सर्वात्मकेशैक्यधिया यथात्मनस्तथेतरेषामपि सर्वदेहिनाम् ।
स्वार्थश्च कामार्थ समानमीप्सति द्रव्याभितार्द्वैतमिदं स पश्यति" ॥ ९१ ॥
(भागवते ७ । १५)

यो भूतशुद्धिप्रतिपत्तया त्रिधा विलोप्य भूतप्रतिपत्तिमीश्वरे ।
विलापयत्यात्मसमस्तपिण्डं स ईश्वरीभावमुपेति योगतः ॥ ९२ ॥

"विज्ञानमेतद्धनुरस्तुवासना वर्गोऽप लक्ष्यं तु तदक्षरं परम् ।
आयम्य तद्भावगतेन चेतसा संधाय विध्येत् स हि तन्मयो भवेत् ॥ ९३ ॥
आत्मा शरो वा प्रणवो धनुः इत्यक्षरं लक्ष्यमुदीर्य विक्षितः ।
अप्रमत्त इत्युक्तं प्रबोधयेद् शरो यथैवं स हि तन्मयो भवेत्" ॥ ९४ ॥ (मुण्डके २ । २)
"प्रक्षाल्य चित्ते तद्वाचि मातृकाक्रमे तु तां प्रणवस्वरेऽप तम् ।
बिन्दौ च नादे तमिमं लिनात्यपि प्राणं महत्यात्मनि तं तमीश्वरे" ॥ ९५ ॥
(भाग ७ । १५)

यथोत्तमा स्वात्मसमर्पणक्रिया सोपासना विग्रतमाधिकारिणाम् ।
यत्र स्थिरं द्वैतमशेषतो न चेच्छिद्यते भक्तिरियं न सोत्तमा ॥ ९६ ॥
देवर्षिरित्थं निजगाद नारदो भक्तात्मनीत्थप्रतिपत्तया त्रिधा ।
उपासको भक्तिपरात्महेश्वरे सायुज्यमाप्नोत्यभयं च विन्दति ॥ ९७ ॥
या भेदधीः सा भ्रममस्यसत्या तामास्थितः श्रेयसि नैति योगम् ।
सत्यं त्वभेदं प्रतिपद्य जीवः स्यादीश्वरः शान्तिघनः प्रबुद्धः ॥ ९८ ॥
अणोरणीयान् महतो महानयं विदेश्वरो विश्वमिदं विधारयन् ।
ज्ञानात्मकः संशयमुच्छिनत्ति यः स्वान्तेऽप्यन्तेऽस्मिन्नयमास्पदं धियः ॥ ९९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ १ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे
ईश्वरैकसत्योपनिषत् संपूर्णा ॥



## मूलोपनिषदि ।

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| १ | ३ | काण्ड | काण्डः |
| १ | १७ | त्येतत्रयं | त्येतत्त्रयं |
| २ | ७ | द्रृष्ट | द्रष्टृ |
| २ | ७ | निभाति | विभाति |
| २ | ११ | स विकार | सविकार |
| २ | १५ | द्रृष्ट | द्रष्ट |
| २ | २१ | चान्ये न | चान्येन |

## कृष्ण त्रिसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ३ | ४ | तु | तु |
| | ५ | परंत्रयं | परं त्रयं |
| | १८ | विरूद्ध | निरुद्ध |
| ४ | १ | स त्तापि | सत्ताऽपि |
| | १० | मो|क्ष्ये | मोक्षे |
| | ११ | तद्धेत्यथ चेत्य | तद्धेत्यथ चेत्य |
| | २३ | विभातियिद्धा | विभाति त्रिद्धा |
| | २६ | क्रियान्वा | क्रियान् वा |
| ५ | २ | भाति सिद्धा | भातिसिद्धा |
| | २ | स्ति सिद्धा | स्तिसिद्धा |
| | १० | ज्ञायमानाहि | ज्ञायमाना हि |
| | १२ | तृथक् | पृथक् |
| | १४ | स्तितासंविदि | स्तिता संविदि |
| | १६ | पाप्मा प्रसङ्ग | पाप्माऽप्रसङ्ग |
| | २५ | तीप्यतेत्रा | तीप्यते वा |
| ६ | २३ | भाति भिन्ना | भातिभिन्ना |
| ७ | ४ | सत्तन्य | सद्गन्य |
| ८ | १ | स विकल्प | सविकल्प |
| | १ | यद्‌थ | यद्र्थं |
| | २ | आकारित | अधारितं |
| | २५ | मर्य | मर्यं |
| | २५ | वृत्तिभाग | वृत्तिभागु. |
| | ३५ | प्रवृद्धाम् | प्रवृद्धाम् |

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| १० | २५ | ज्ञानोदया- | ज्ञानोदय |
| ११ | ३१ | पृथक | पृथक् |
| | ३३ | पृथक | पृथक् |
| १२ | १२ | त्युरक्स्य | त्युरस्य |
| | १५ | याति | प्रयाति |
| १३ | २३ | शोका | शोको |
| | ३० | तेतत् | तं तत् |
| १४ | १६ | मचिचत् | मचिधेत् |
| | १६ | रमेत् | रमेत |
| १५ | १० | मृत्युमृत्यु | मृत्युर्मृत्यु |
| | १२ | परिपूति | परिपूर्ति |
| | २१ | मुशेयत | मुत्वयत |
| | ३२ | ध्याात्म | ध्यात्म |
| | ३४ | हन्ति | हन्ति |
| १६ | ५ | श्रिनि | धिग् वि |
| | १४ | कामोऽस्ति | कामेऽस्ति |
| | १६ | भयं न | भयं नु |
| | ३२ | प्रवर्तते | प्रवर्तते |
| १७ | ११ | कपालये | कपालये |
| | १२ | त्यसा | त्यसो |
| | २३ | वर्मणा | वर्मण |
| १८ | २२ | माना कृत | मानाकृत |
| | २२ | थवाकचित् | थवा कचित् |
| २० | १८ | तद् यदि | तद्यदि |
| | ३१ | कन्चित् | कन्चित् |
| २१ | १ | सामथ्यम् | सामर्थ्यम् |
| | ८ | प्रतिपूर्ति | प्रतिपूर्ति |

## पूर्णद्धिसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| २२ | १५ | घनो परिस्तर | घनोपरि, स्तर· |
| | १७ | त्स्यति | पत्स्यंति |
| | १६ | पत्स्य ती | पत्स्यंती |
| | २८ | हारो | हादो |
| २३ | ६ | पूर्ण | पूर्ण |

| [illegible] | पं० | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| | ३२ | तताऽन्य | ततोऽन्य |
| [illegible] | ८ | ग्रहणो | ग्रहणे |
| [illegible] | १२ | विनश्य | निमृश्येति वा पाठः |
| | २० | दुष्टोऽपि | दृष्टोऽपि |
| [illegible] | १२ | स्यथा | स्तथा |
| [illegible] | १७ | कर्म्मणे | कर्म्मणो |
| | २२ | भेदस्तु | भेदास्तु |
| [illegible] | ८ | इात | इति |
| [illegible] | १ | तनह | तयेह |
| | १ | स्वमोज्ये | स्वमांशे |
| | २५ | पोऽस्ति | पोऽस्ति |
| ३२ | १ | लाह | लोह |
| | ३ | माति | मान्ति |
| | १२ | कृष्णोऽतिसूक्ष्मावरणो | कृष्णोऽतिसूक्ष्मावरणं |
| | २१ | स्यन्तु | स्यं तु |
| | २६ | वृत्ता | वृत्तौ |
| ३३ | ११ | रूपामि | रूपमि |
| | १२ | तयानं माशा नि | तयोर्न माशा नि |
| | २१ | वलस्तु | वलास्तु |
| ३४ | १८ | सदढा | सुदढा |
| ३५ | १३ | चूणतु | चूर्णं तु |
| | १७ | स्त्रया | स्त्रय. |
| | १८ | त्र्त्या | त्र्त्यां |
| | २१ | अशीक्ष्णं तानाङ्कुरुद्ववृत्या सह-वैचान्नव सानगुरुवृत्या तानि | |
| ३६ | ११ | प्राणा | प्राण |
| | १३ | विद्यद्रे | विद्यद्रे |
| | २४ | धीयते | धीयन्ते |
| | २५ | भित्राणि | मित्राणि |
| ३७ | १७ | न्यधार | न्यधरा |
| | १८ | इत्थं तु | इत्थं तु |
| | २१ | संहिता | संहिता |
| ३८ | ३२ | चतुष्या | चतुष्णा |
| ३९ | ६ | वृहती | वृहतो |
| | १५ | ग्रहणं | ग्रहणां |
| ४१ | ६ | संसर्ग | संसर्गां |

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| ४१ | १३ | आसङ्का | आसङ्क |
| | १६ | असंसर्गं | असंसर्गा |
| | १६ | ग्रहाण | ग्रहाणि |
| ४२ | १५ | उद्वद्ध | उद्वद्ध |
| | १५ | मस्त्‌ि | मस्ति |
| | २६ | यश्नन | यत्रैत |
| ४३ | २६ | रस ऽक्षरो | रसोऽक्षरो |
| ४४ | ४ | अथाक्षर | अथ क्षरे |
| ४५ | २७ | गाया | माया |
| ४७ | २६ | वन्धश्च | वन्धश्च |
| ४८ | १८ | प्यमारो | प्यभावो |
| | २१ | युङ्के | युङ्क्ते |
| ४९ | ६ | मायामि | मालामि |
| | २० | ग्रह्मति | ४ महंति |
| | २१ | ४ उन्मी | उन्मी |

## मत्यैकमत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| ५१ | २४ | मोतर्व्य | मोतव्यं |
| | २८ | मयध्वरक्ष | मयेश्वरं च |
| ५३ | ११ | मृयो | मृयौ |
| | १७ | मृययो | मृत्ययो |
| | १३ | यपालय | यथोर्मय |
| | १४ | ऽमृत | ऽमृतं |
| ५४ | २० | आहं हि सत्य | मानं हि सत्यं |

## पुरुषैकमत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| ५६ | ५ | त्रिधा या | त्रिधा वा |
| ५७ | ३१ | हय | हयं |
| | ३१ | तर्द्देव | तद्देव· |
| ५८ | २१ | मथा मापयते | यथा मापयते |
| | २० | मोऽर्था | मोऽर्थो |
| | ३१ | मनत | मनूनं |
| ५९ | ६ | घोपयथते | घोपयथते |

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ६० | १७ | प्रभदोत् | प्रभेदात् |
| | २१ | ताणुसृष्टिः | ताण्डसृष्टिः |
| | २२ | क्षुद्रात्तु | क्षुद्रा तु |
| ६१ | २१ | यथा व | यथा वा |
| | २१ | श्वरोऽपि | श्वरेऽपि |
| | २२ | कठ थतिः | कठश्रुतिः |
| ६२ | ७६ | श्लोकाग्रे—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्चयत् इत्यधिकः पठनीयः । | |
| ६३ | ११ | ब्रह्मा कर्म्मं च कर्म्माणि | ब्रह्मा कर्म्म च कर्मणि |
| ६४ | १ | तापस्य | तापसस्य |
| | २ | सुपर्णः समुद्र | सुपर्णं स समुद्र |
| | ४ | दिलस | दिल से |
| ६५ | ३—४ तृतीय चतुर्थ पङ्क्त्योर्मध्ये त्रुटिः-अर्थक्रिया यत्नः ( शीर्षकम् ) | | |
| | २१ | दात्मन्यि नो | दात्मन्विन्नो |
| ६६ | १ | विलास | विलांस |
| | ७ | दौण्यं | दौर्ण्यं |
| | १५ | काशो पाद्रा | काशोपाद्रा |
| ६७ | ८ | भूताप | भूतोप |
| | १७ | प्रसित | प्रसति |
| | २० | प्राणे | प्राणो |
| | २५ | पराश्चकश्चित् | परांश्च कांश्चित् |
| ६८ | ५ | न्दुि प्रयान् गवाश्वा | न्दुप्रायान् गवाश्वा |
| | १५ | संभायिता | संभाविताः |
| | १५ | दृष्टा | दृष्टाः |

## संशयाधिकारे संदिग्धसर्वोपनिषदि ।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ७० | ८ | वाचं | वाच्यं |
| ७१ | ५ | कउ वृक्ष | कउ स वृक्ष |
| | ६ | तदघ्यति | तद् यदघ्यति |
| | ८ | जो दुनियां | जो दुनियां पर कब्जा कर खड़ा है |
| | १० | अर्वाग्र | अर्वाग् |
| | १७ | दीर्घतया | दीर्घतमा |
| | १८ | मात्मान | मात्मन |
| | १६ | मस्य | मस्य |

| पृ० | पं० | अशुद्ध पाठा | शुद्ध पाठा. |
|---|---|---|---|
| ४१ | १३ | आसङ्गाः | आसङ्गः |
| | १६ | असंसर्गः | असंसर्गा. |
| | १६ | ब्रह्माण | ब्रह्मणि |
| ४२ | १५ | उद्बद्ध | उद्बद्ध |
| | १५ | मस्ति् | मस्ति |
| | २६ | यत्रत | यत्रैत |
| ४३ | २६ | रस.ऽक्षरो | रसोऽक्षरो |
| ४४ | ५ | अथाक्षरे | अथ क्षरे |
| ४६ | २७ | माया | मायाः |
| ४७ | २६ | वन्धश्च | वन्धश्च |
| ४८ | १२ | प्यमाजो | प्यमावो |
| | २१ | युङ्के | युङ्क्ते |
| ४६ | ६ | मायामि | मालामि |
| | २८ | मह्मति | ५ मह्मेति |
| | २१ | ५ उन्मी | उन्मी |

## प्रत्ययैकसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठा | शुद्ध पाठा. |
|---|---|---|---|
| ५१ | २४ | प्रोतर्य | प्रोत्तर्य |
| | २८ | मयध्वरश्च | मयेश्वरं च |
| ५३ | ११ | मृत्यो | मृत्यौ |
| | १२ | मृत्ययो | मृत्यत्रो |
| | १३ | यथोन्नयः | यथोर्म्मय |
| | १४ | ऽमृत | ऽमृतं |
| ५४ | २१ | अहं हि सत्यं | भानं हि सत्यं |

## पुरुषैकसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठा | शुद्ध पाठा. |
|---|---|---|---|
| ५६ | ५ | त्रिधा या | त्रिधा या |
| ५७ | ३१ | ह्रष्ठ | ह्रष्टं |
| | ३१ | तदेक· | तदेकः |
| ५८ | २१ | तथा भाययते | यथा भाययते |
| | २५ | सोऽथो | सोऽर्थो |
| | ३१ | मनतं | मनृतं |
| ५९ | १ | चोपपद्यते | चोपपद्यते |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ६० | १७ | प्रभदोत् | प्रभेदात् |
| | २१ | ताणुस्रुष्टिः | ताण्डसृष्टिः |
| | २२ | क्षुद्रात्तु | क्षुद्रा तु |
| ६१ | २१ | यथा व | यथा वा |
| | २१ | श्वरोऽपि | श्वरेऽपि |
| | २२ | कठ थतिः | कठश्रुतिः |
| ६२ | ७६ | श्लोकादग्रे—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्य-मगन्धवच्चयत् इत्यधिकः पठनीयः । | |
| ६३ | ११ | ब्रह्मा कर्म्म च कर्म्माणि | ब्रह्मा कर्म च कर्माणि |
| ६४ | १ | तापस्प | तापसस्य |
| | २ | सुपर्णः समुद्र | सुपर्णः स समुद्र |
| | ४ | दिलस | दिल से |
| ६५ | ३—४ तृतीय चतुर्थ पङ्क्त्योर्मध्ये त्रुटिः-अर्थक्रिया पक्षः ( शीर्षकम् ) | | |
| | २१ | दात्मन्वि नो | दात्मन्विनो |
| ६६६ | १ | विस्रस | विस्रंस |
| | ७ | दोष्ण्यं | दौष्ण्यं |
| | १५ | कान्नो पादा | कान्नोपादा |
| ६७ | ८ | भूताप | भूतोप |
| | १७ | प्रसित | प्रसति |
| | २० | प्राणे | प्राणो |
| | २५ | पराश्चकश्चित् | पराश्च कांश्चित् |
| ६८ | ५ | न्दिु प्रयान् गवाश्वा | न्दुप्रायान् गवाश्वा |
| | १५ | संभाविता | संभाविताः |
| | १५ | इक्षा | इक्षाः |

## संशयाधिकारे संदिग्धसर्वोपनिषदि ।

| | | | |
|---|---|---|---|
| ७० | ८ | वाचं | वाच्यं |
| ७१ | ५ | कउ वृक्ष | कउ स वृक्ष |
| | ६ | तदप्यति | तद् यद्प्यति |
| | ८ | जो दुनियां | जो दुनियां पर कब्जा कर स्वड़ा है |
| | १० | अर्वाग्र | अर्वाग |
| | १७ | दीर्घतया | दीर्घतमा |
| | १८ | मात्मान | मात्मन |
| | १९ | | |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
| --- | --- | --- | --- |
| | १६ | नस्पा | नस्या |
| | २८ | रूप | रूपं |
| | ३५ | द्रष्ट य | द्रष्टव्य |
| ७२ | २ | क्ष | क |
| | २६ | दशा | दशा |
| ७३ | २ | मतेद् | मेतद् |
| | १५ | पते.........प्रतीया | पते...... ..प्रतीता |
| | १६ | तदिन्द्रय | तदिन्द्रिय |
| ७६ | १४ | वैफल्प | वैफल्य |
| ७७ | १५ | बहो | बह्वो |
| ~ | १६ | सर्वकथावितण्डा | सर्व कथा वितण्डा |
| ७८ | १६ | वृक्षनिधा | वृक्षविधा |
| | १६ | लामानि | लोमाणि |
| ८० | १५ | सहय | सहैव |
| | २१ | निश्चतो | निश्चितौ |
| ८२ | ११ | शक्तिप्रबुद्धा | शक्ति प्रबुद्धा |
| | १२ | शक्तिप्रबुद्धा | शक्ति प्रबुद्धा |
| | १४ | युक्तये | भुक्तये |
| ८२ | २३ | तान्येवनु | तान्येवानु |

## विशिष्टत्रिसत्योपनिषदि ।

| | | | |
| --- | --- | --- | --- |
| ८३ | २४ | श्वरी | श्वरो |
| ८४ | २ | यथाश्रते | यथाऽश्रुते |
| | २६ | वृि | वृ |
| ८६ | २ | ताण्डूय | ताण्ड्य |
| | ६ | वेष्ट | वेष्टव |
| | १५ | श्वाः | श्वाः |
| | २३ | पानश्च | पाश्च |
| ८७ | ५ | पशस्कारी पशसा | पेशस्कारी पेशसा |
| | २१ | नाना | नाना |
| ८८ | ३३ | लब्धः | लब्धा |
| | ३४ | नरेणत्वरेण | नरेणावरेण |
| ८६ | ६ | परीक्षमाणः | परीक्षमाणाः |
| ६२ | २६ | सूर्य्योऽभिजिह्वानुदिश | सूर्य्योभिजिह्वानुदिश |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| १२० | ८ | सृष्टा | सृष्ट्वा |
| | ११ | रत | रत्त |
| | २२ | ग्रहा | ग्रहाः |
| | ३१ | धत्त | धत्ते |
| १२१ | २४ | क्रुरे | क्रुरो |
| १२२ | २३ | स्वन्तत्र | स्वतन्त्र |
| १२४ | ७ | हडिदश्व | हरिदश्व |
| १२५ | २२ | क्रूरः | क्रूरं |
| १२६ | ३ | शाश्वत्वात् | शाश्वतत्वात |
| १२८ | २ | वर्णे | वर्णौ |
| १३० | २० | भेदास | भेदात्तु |
| १३१ | २७ | स्थलं | स्थूलं |
| १३२ | १३ | भनिष्यत् | भनिष्यद् |
| १३४ | १५ | योगा | योग |
| १३८ | १६ | सत्वं | सत्तं |
| १३६ | १६ | स्तया | स्तथा |
| | २५ | नत्वाहु | यत्वाहु |
| | २८ | भोत् | भात् |
| १४० | ७ | कमतद्रूप | कर्मतद्रूप |
| | ३४ | व्यामाति | व्याप्नोति |
| १४१ | ४ | ते न | तेन |
| | ११ | निभेदि | विभेद |
| | १६ | ज्ञानादिना | ज्ञानाछिन |
| | २३ | सृष्टवेद | सृष्ट्वेद |
| १४२ | ८ | भुवं | भुव |
| | १८ | परमात्म | परात्म |
| | २१ | मेत | मैत |
| १४३ | २६ | शान्तघन | शान्तिघन. |
| १४४ | ६ | मिति | मित |